# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




४५ वर्षे

१-२ अङ्कौ

ज्येष्ठ-भाद्रपदपूर्णिमे

जून–सितम्बर, १९९० ई०

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

सम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

उप-सम्पादकः

डॉ० हरिश्चन्द्रमणित्रिपाठी

प्रकाशनाधिकारी




४५ वर्षे

१-२ अङ्कौ

वार्षिकं मूल्यम्—३० रूप्यकाणि

जून-सितम्बर, १९९०

❀❀❀

प्रकाशकः—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

मुद्रकः—
विजय-प्रेस,
सरसौली, भोजूबीर
वाराणसी

प्राप्तिस्थानम्—
विक्रय-विभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१ ००२

# प्रास्ताविकम्

चतुश्चत्वारिंशद्वत्सरान् परिपूर्य संस्कृतानुसन्धानभुवनसुषमा 'सारस्वती सुषमा' स्वमनोज्ञतया दोषज्ञमनांसि समावर्ज्य साम्प्रतं पञ्चचत्वारिंशं संवत्सरं प्रविविक्षुश्चरण-क्रममादधाना विद्योततेतमाम्। विविधशास्त्रीयाणां गभीरागभीरविषयाणां प्रातिनिध्य-माचरद्भिर्निबन्धैरियमात्मानं परिमण्डयन्ती विलसति विद्वदग्रेसराणामाकर्षणविषया पूर्वत एव। प्राच्यविद्यामनभिसम्बध्नन्तो गवेषणाविषयजातमुपस्थापयन्तो निबन्धाः अपीह समासादयन्ति समाश्वासनं स्वासनं च। प्रकृतेऽस्मिन्नङ्कयामले **प्रो० रामचन्द्र-द्विवेदि**विभाविते‌ऽद्वयपदार्थविमर्शाख्य आद्ये निबन्धे तावदनतिचर्चितकाश्मीरिकशैवागम-सिद्धान्तवर्णनपुरस्सरं विविधवेदान्तमतान्युल्लिख्य निरस्य चानूनकानां भावानां सर्वात्मकत्वं शैवरूप्यं चोपपाद्येते। पण्डितप्रकाण्डस्य गभीरतरोऽयं निबन्धः शङ्करा-द्वैतेन समं तौल्यार्थमध्ययनविषयीक्रियमाणो विद्वत्तल्लजानां मनोमोदाय तदनुसन्धि-त्सूनां च सेद्धा श्वःश्रेयसाय।

विद्वत्तल्लजैः **श्रीमत्करुणापतित्रिपाठिभिः** सन्दृब्धं स्कन्दमहापुराणीयकाशी-खण्डस्य पञ्चाशदध्यायानां समालोचनं काशीखण्डपर्यालोचननाम्ना प्रकाशितं प्रचुरां तौलनिकीं सामग्रीं प्रस्तुवदिह विद्वन्मनोमुदे भविष्यति। **डॉ० केदारनाथत्रिपाठि**-विभावितो भारतीयदर्शनेषु प्रमाणमीमांसाख्यः सारवान् निबन्धो भूयोगवेषणाय समुत्प्रेरयेद् गवेषणापथिकान्। शुद्धब्रह्मविषयकवृत्तिज्ञाने सति ब्रह्मणः शुद्धत्वं ह्येयेते-त्यनुयोगं मनसि कुर्वाणेन **डॉ० आदित्यनाथभट्टाचार्येण** नानापक्षमन्थनपूर्वकमवाप्तया सुधया स्यात् कापि तर्पणा पाठकानां 'ब्रह्मज्ञानशब्दस्य निर्दुष्टार्थपरीक्षणम्' इत्याख्य-तन्निबन्धानुशीलनेन। यजुषां शुक्लकृष्णत्वविभागे कानिचन नूतनानि कारणानि मृगयमाणस्य **डॉ० देवेन्द्रनाथत्रिपाठिनो** वेदेषु यजुषां शुक्लत्वं कृष्णत्वं चेति निबन्धो विमर्शार्हः। काव्यरसान्वेषणे कृतमतयश्चिराय प्रावर्तिषत प्रवर्तन्ते च। शिल्पशास्त्रीय-रसान्वेषणे तु प्रवृत्तिवैरल्यमेव। शिल्पशास्त्रे रसस्थितिः का? उभयत्र काव्यशिल्प-शास्त्रयोः के तदीये साम्यवैषम्ये? इत्यादिसमाधित्सया प्रवृत्तेन **डॉ० पारसनाथ-द्विवेदिना** ग्रथितं 'शिल्पशास्त्रे रसविमर्शः' इति शीर्षकं सोपपत्तिकं निबन्धं रसिकाः पाठका रसमाधाय स्वादिष्यन्त एव।

न केवलमिह प्रकाशितैः प्रपुष्टशेमुषीकाणां पण्डितप्रकाण्डानां गवेषणाप्रधाननिबन्धैस्तदास्वादनतया च संस्कृतसंसारो जायते सौहित्यभाक् प्रत्युत गवेषणाप्रतिभाजुषां प्रत्यग्राणामपि विचक्षणानां निबन्धैस्तत्सामग्रीमञ्जुलतया च प्रसीदति स्वान्तनिशान्तं गुणैकपक्षपातिनां कोविदानाम्। तदुभयतो भिन्ना प्रत्नतेमननीकाशानां तत्तद्विषयकपाण्डुलिपीनां स्वादप्राज्यता केषां तज्ज्ञानामविदितचरा। अप्रकाशितपूर्वा विशिष्टा लघुपाण्डुलिपिरप्यत्र यथायथं सम्पादिता लघुग्रन्थतया सुषमायां सभाज्यते प्राकाश्यमानीयमाना। एतस्मिन्नङ्कयामले काश्मीरिकेण वामनदत्तेन प्रणीतं जनेनानेन च सविधि सम्पादितं संवित्प्रकाशं लघुग्रन्थतया सुषमारसिकानां पुरस्तात् परिवेषयति **सुषमासम्पादकः**

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# विषयानुक्रमणी





# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ४५ वर्षे | ज्येष्ठ-भाद्रपदपूर्णिमे, वि० सं० २०४७ | १–२ अङ्कौ |
|---|---|---|

# अद्वयपदार्थविमर्शः*

**प्रो० रामचन्द्रद्विवेदी**

अधिष्ठाता, संस्कृताध्ययन-संकायस्य

राजस्थानविश्वविद्यालये

जयपुरम्

❋❋❋

इतः पूर्वं प्रकरणान्तरेषु वारं वारं सूत्रितोऽपि शिवाद्वयवादो दर्शनान्तरप्रयुक्ताद्वैताद्वयशब्दार्थपरामर्शपुरस्सरं सविशेषमुल्लेखमर्हति। योगाचाराणां विज्ञानाद्वैतम्, शून्यमेव सर्वमभ्युपगच्छतां माध्यमिकानां शून्याद्वयम्, शब्दविवर्तं शब्दपरिणामं वाऽभ्युपगच्छतां वैयाकरणदार्शनिकानां भर्तृहरिप्रभृतीनां शब्दाद्वैतम्, निर्विशेषब्रह्माद्वैतं शाङ्करवेदान्तिनाम्, विशिष्टाद्वैतं रामानुजीयानाम्, शुद्धाद्वैतं च वल्लभाचार्यानुगामिनां विश्रुतमेव। भूताद्वैतवादो लोकायतिकानामित्यपि केचन प्रतिपन्नाः। तत्र पूर्वमद्वैताद्वयशब्दयोः प्रवृत्तिं पर्यालोचयामः।

बौद्धाः, वेदान्तिनस्त्रिकदार्शनिकाश्च प्रायेण अद्वैतमद्वयं च पर्यायत्वेन प्रयुञ्जते स्म। तथा हि गौडपादाचार्याः—"अद्वयेन च कल्पितः, भावा अप्यद्वयेनैव तस्मादद्वयता शिवा" (२–३३), "प्रपञ्चोपशमोऽद्वयः" (३-३५), "अद्वयं च द्वयाभासम्" (३-३०) "विवदन्तोऽद्वयाः" (४-४), "विज्ञानं शान्तमद्वयम्" (४-४५), "यानुत्पत्तिः समाद्वया" (४–७७), "तत्साम्यमजमद्वयम्" (४–८०) इति बहुधाऽद्वयशब्दं प्रयुज्य अन्यत्र

* निबन्धोऽयं विदुषा लेखकेन प्रो० रामचन्द्रद्विवेदिना "आचार्यश्रीबदरीनाथशुक्लव्याख्यानमालायाः" तृतीय उपक्रमे २९-७-१९९२ दिनाङ्के पठितः।

स्वकारिकास्वेव—"अद्वैतः सर्वभावानाम्" ( १-१० ), "अद्वैतः परमार्थतः" (१-१७) "रज्जुनेवेति चाद्वैतम्" ( २-१८ ), "अद्वैते योजयेत् स्मृतिम्," "अद्वैतं समनुप्राप्य" ( २-३६ ), "अद्वैतं परमार्थो हि" ( ३-१८ ) इत्यत्राद्वैतशब्दं प्रयुञ्जते। नृसिंहोत्तरतापिन्याद्युपनिषत्सु[1] तथैव पदद्वयस्य पर्यायित्वेन प्रयोगः प्राप्यते। अमरसिंहेन स्वकोशे स्वर्गवर्गे बुद्धोऽद्वयवादीति घुष्यते—"षडभिज्ञो दशबलोऽद्वयवादी विनायकः"। अमरसिंहः—"अद्वयमद्वैतं वदन्त्यवश्य"मिति। क्षीरस्वामी च—"अद्वयं विज्ञानाद्वैतं वदन्तमवश्य"मिति भाष्यं करोति। श्रीचन्द्रकीर्तिर्माध्यमिकवृत्तौ प्रसन्नपदायामुपक्रमे स्पष्टमुद्घोषयति—"तस्मादद्वयवादिनां माध्यमिकानां कुतो मिथ्यादर्शनम् ? नो वयं नास्तिकाः। अस्तित्वनास्तित्वद्वयनिरासेन तु वयं निर्वाणपुरोगामिनमद्वैतपदं विद्योतयामः"। श्रीशङ्कराचार्योऽपि तथैव माण्डूक्यकारिकाभाष्येऽद्वयपदमद्वैततात्पर्यतया प्रयुङ्क्ते—"ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वमद्वयमेतन्न बुद्धेन भाषितम्। यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्रकल्पना च अद्वयवस्तुसामीप्यमुक्तम्। इदं तु पारमार्थिकमद्वैतं वेदान्तेष्वेव ज्ञेयम्"।

तथा चान्यत्र छान्दोग्योपनिषद्भाष्यम्—"परमार्थसद् अद्वयं ब्रह्म" (६।२।१), तैत्तिरीयोपनिषद्भाष्यं ( २-१ ) चाद्वयपदस्याद्वैतपर्यायतां स्वीकुर्वाते। संहितासूपनिषत्सु चैतत्पदद्वयं न श्रूयते[2]। तत्र प्राधान्येन एकत्वस्याम्नायः सुप्रतिष्ठः। तथा हि—"एकं सद्विप्रा बहुधा वदन्ति" ( ऋक्० १।१६४।४६ ) अथवा—

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीमुत द्यामुतेमां कस्मै देवाय हविषा विधेम[3]॥
( ऋक्० १०।१२१।१ )

ऋग्वेदान्तर्गतेन पुरुषसूक्तेन "पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्" ( ऋक्० १०।९।२ ) इत्यनेन द्यौरन्तरिक्षादीनामदितिरूपत्वं श्रुत्या[4] चान्यत्र एकस्यैव प्राधान्यं प्रतिपिपादयिषितम्। अमुमेवार्थं आथर्वणं स्कन्दसूक्तं ( १०।७-८ ) उच्छिष्टसूक्तं ( ११।९ ) च दृढयतः।

---

१. ( ) नृसिंहोत्तरतापिन्युपनिषत् ८. ४, (ii) मुक्त्युपनिषत् १.३४; २.७३।

२. मैत्र्युपनिषदि ( ६।७ ) यत्राद्वैतीभूतं विज्ञानम्, बृहदारण्यकोपनिषदि ( ४।३।३२ ) 'सलिल एको द्रष्टाऽद्वैतो भवति' इत्यत्र परोक्षं माण्डूक्ये (७) 'शान्तं शिवमद्वैतं चतुर्थम्' इत्यत्र च साक्षाद् अद्वैतपदमुपलभ्यते। नान्यत्रोपनिषत्सु प्रधानतया प्रख्यातासु अद्वैतपदस्य अद्वयपदस्य वा व्यवहारो दृष्टः।

३. शतपथब्राह्मणममुमेवार्थमनुवदति ( द्र. ५।१।२-१० )

४. अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।
विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्॥ (ऋक्० १।८८।१०)

उपनिषत्सु यथाऽयमर्थो बहुधा संवादितः सिद्धान्तितश्च तत्र भगवच्छङ्कराचार्योद्धृतानि वेदान्तवाक्यानि प्रमाणकोटिमाटीकन्ते। तथा हि चतुःसूत्रीस्थचतुर्थसूत्रभाष्योद्धरणानि--

१. सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम्। ( छान्दोग्य० ६।२।१ )

२. आत्मा वा इदमेक एवाग्र आसीत्। ( ऐतरेय० २।१।१ )

३. ब्रह्मैवेदममृतं पुरस्तात्। ( मुण्डक० २।२।११ )

४. ऐतदात्म्यमिदं सर्वम्।

तदेवैकं तत्त्वमद्वितीयपदेन छान्दोग्योपनिषदि ( ६।२।१ ) विवृतम्। बृहदारण्यकोपनिषदि ( २।४।१४ ) 'यत्र हि द्वैतमिव भवति' इत्यत्र द्वैतपदप्रयोगे कृतेऽपि अद्वैतपदप्रयोगो व्यावृत्त्या विवृतेऽप्यर्थे न प्राप्यते। तथा हि तत्र बृहदारण्यकोपनिषत् ( २।४।१४ ) "यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं जिघ्रेदि"त्यादि श्रूयते, अद्वैतपदप्रयोगस्त व प्राप्यते। तथैवाद्वयपदप्रयोगविषयेऽपि ज्ञेयम्।

अद्वैताद्वयशब्दयोरनेकधा प्रयोगो गौडपादकृतमाण्डूक्यकारिकासूपलभ्यते—

अद्वयं च द्वयाभासं मनः स्वप्नो न संशयः।
अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः॥ ( ३।३ )

अत्र श्रीशङ्कराचार्यपादानां भाष्यम्—"रज्जुरूपेण सर्प इव परमार्थत आत्मरूपेण अद्वयं सत्। द्वयाभासं मनः स्वप्ने न संशयः। न हि स्वप्ने हस्त्यादिग्राह्यं तद्ग्राहकं वा चक्षुरादिद्वयं विज्ञानव्यतिरेकेणास्ति। जाग्रदपि तथैव इत्यर्थः, परमार्थसद्विज्ञानमात्राविशेषात्। अर्थाद् ग्राह्यग्राहकरूपेण संविभक्तं द्वयाभासं मायया मनोदृश्यतया वा स्पन्दन्ते[1], आत्मसत्यानुबोधेनामनस्तादशायां द्वैताभावेऽद्वैतं पर्यवस्यति। धर्मकीर्तेः प्रमाणवार्तिकवचनम्—

नीलादिरूपस्तस्यासौ स्वभावोऽनुभवश्च सः।
नीलाद्यनुभवात्ख्यातः स्वरूपानुभवोऽपि सत्॥
( प्रमाणवार्तिके, ३।३२८ )

---

१. सोऽयमर्थः पूर्वतनकारिकायां विशदं प्रतिपादितः—

यथा स्वप्ने द्वयाभासं स्पन्दते मायया मनः।
तथा जाग्रद् द्वयाभासं स्पन्दते मायया मनः॥ (३।२९)

परस्ताच्च द्वयमेव द्वैतशब्देन विवृतम्—

मनोदृश्यमिदं द्वैतं यत् किञ्चित् सचराचरम्।
मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते॥ (३।३१)

दिङ्नागानां च—

यदन्तर्ज्ञेयरूपं तत् बहिर्वदवभासते।
सोऽर्थो विज्ञानरूपत्वात् प्रत्ययत्वात् तथापि च॥

( आलम्बनपरीक्षायाम्–७ )

इति वाक्यमनुसन्धाय श्रीविधुशेखरभट्टाचार्यादयो माण्डूक्यकारिकाप्रतिपादनं बौद्धमतानुकूलं मन्यन्ते, तदनुसन्धाय चाद्वयाद्वैतपदव्याख्यानं चिकीर्षन्ते। सर्वज्ञात्ममुनिर्निर्विशेषब्रह्मवादिनां वेदान्तिनामद्वैतं बौद्धसम्मतमेवेति पूर्वपक्षं संक्षेपशारीरके ( २।२५।२७ ) साटोपमुट्टङ्कयति—

(क) ननु शाक्यभिक्षुसमयेन समः प्रतिभात्ययं च भवत्समयः।
यदि बाह्यवस्तु वितथं नु कथं समयामिमौ न सदृशौ भवतः॥

(ख) यदि बोध एव परमार्थवपुर्ननु बोध्यमित्यभिमतं भवति।
ननु चाश्रितं भवति बुद्धमतमेव कृत्स्नमिह मस्करिभिः॥

(ग) उपयन्भदन्तमुनिना सदृशः कथमेष वैदिकमुनिर्भवति।

अत्र वेदान्तमतं सिद्धान्तयति सर्वज्ञात्ममुनिः —

परमार्थसंश्रयतमोजनितं प्रविभक्तमेव तु परस्परतः।
स्थिरमभ्युपेतमिह समये न तु मातृमानविषयप्रभृति॥

( संक्षेपशारीरके—२।२८ )

सोऽयमर्थः खण्डनखण्डखाद्ये श्रीहर्षेण प्रथमे परिच्छेदे स्पष्टतरं निरूपितो यद् बौद्धाः सर्वमेव मिथ्या अनिर्वचनीयं वेति कथयन्ति; किन्तु अद्वैतवेदान्तिनः सर्वमिदं जगत् सत्त्वासत्त्वाभ्यामनिर्वचनीयमिति कथयन्ति। सत्त्वन्तु एकमेव। जगत् तु न सत्त्वेन न वा असत्त्वेन प्रतोयते। सौगतब्रह्मवादिनोः विशेष क इति चेदयं विशेष :— यदस्माकं मते सर्वमनिर्वचनीयं भवति।········विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सत्त्वासत्त्वाभ्यामनिर्वचनीयं ब्रह्मवादिनः संगिरन्ते[१]। अयमत्र निष्कृष्टार्थः—अद्वयाद्वैतशब्दयोः बौद्धेषु वेदान्तिषु च पर्यायितया प्रयोग उपलभ्यते; किन्तु तयोरभिप्रायस्तु भिद्यते। बौद्धानां मते अद्वयेन अद्वैतेन वा द्वयं द्वैतवद् निषिध्यते। वेदान्तिभिस्तु निषेधेन सह सत्त्वमेकत्वं परमार्थं सदिति व्यवस्थाप्यते। तत्राद्वितीयपरम्, एकं सदितिपरं वाद्वयमद्वैतं

१. बौद्धवेदान्तसन्दर्भाणां बहूनां कृते द्र. अद्वैतदर्शनम्, आर. करुणाकरन्, पञ्चमविश्वसंस्कृतसम्मेलनम्, वाराणसी।

वा । कूटस्थनित्यं सदिति बौद्धा न स्वीकुर्वन्ति । असन्मूलं निषेधपरं च बौद्धानामद्वयम्[1] । सर्वस्य शून्यतां विज्ञप्तिमात्रतां पा क्षणिकां ते साधयन्ति । प्रायेण वेदान्तशास्त्रमद्वैतपद-मद्वयपदापेक्षया बहु मन्यते प्रयुङ्क्ते च ।

अद्वैतपदव्युत्पत्तिस्तु तैरियं प्रदर्श्यते—द्विधा इतं द्वीतम् । तस्य भावो द्वैतम् । द्विधेतं द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते ( बृ. वा. ४।३।१८०७ ) । न विद्यते द्वैतं द्विधाभावो यत्र तत् ( सिद्धान्तबिन्दुः, श्लो० १० ) ।

"तदन्यत्वमारभमाणशब्दादिभ्यः" इति सूत्रस्थं शाङ्करभाष्यं "द्विधा भेदमितः प्राप्तः । न द्वैतो द्वितीयरहितः", अद्वैतपदमद्वितीयार्थतया प्रख्यापयति । अद्वयपदं नास्ति द्वयं द्वित्वं तज्ज्ञानमित्यर्थे व्युत्पाद्यते । अवयवभेदं प्रकारभेदं वा निराकरोत्यद्वयशब्द इति केचन मन्यन्ते[2] ।

त्रिकशास्त्रेष्वपि अद्वयाद्वैतशब्दौ पर्यायरूपेण बहुशः प्रयुज्येते । तथा हि—

इदं हि तत् पराद्वैतं भेदत्यागग्रहौ न यत् ।
( मालिनीविजयवार्तिके–१।१२३ )

इदं द्वैतमिदं नेति तदिदं च द्वयाद्वयम् ।
इति यत्र समं भाति तदद्वयमुदाहृतम् ॥ (तत्रैव—१।६२९ )

अत एव पराद्वैतं यच्छिवानुग्रहात्मकम् ।
तस्योपायं परं ब्रूते हृदयं स्पन्दनात्मकम् ॥ (तत्रैव—१।१८ )

या तत्र[3] सम्यग् विश्रान्तिस्तत् पराद्वैतमुच्यते । ( तत्रैव—२।४२ )

---

१. अस्तित्वनास्तित्वरूपद्वयाभावः अथवा, शाश्वतोच्छेदरूपद्वयाभावः अद्वयम्–द्र. तत्रैव, पृ. ९ । वस्तुतो विषयचित्तद्वयाभावो बौद्धानामभिलषितोऽद्वयार्थः प्रतिभाति । तथा हि महायानसूत्रालङ्कारे असङ्गः—"अर्थान् स विज्ञाय च जल्पमात्रात् सन्तिष्ठते तन्निभ-चित्तमात्रे । प्रत्यक्षतामेति च धर्मधातुस्तस्माद्वियुक्तो द्वयलक्षणेन ।

तथैव वसुबन्धुः —

चित्तमात्रोपलम्भेन ज्ञेयार्थानुपलम्भता ।
ज्ञेयार्थानुपलम्भेन स्याच्चित्तानुपलम्भता ॥

२. वस्तुतस्तु बौद्धैरद्वयशब्देन पदार्थे पदार्थबुद्धौ च ऐक्यमिति व्यवहारः क्रियते । तेषामा-शयः—पदार्थस्तु नास्त्येव, यो हि पदार्थः प्रतीयते स तु बुद्धिरेव । अन्ते बुद्धिरपि नास्ति इति । अद्वैते तु कश्चित् प्रकारो भेदो न वर्तते । यत्तु सजातीयविजातीयस्वगतभेदशून्यं तत् सद् वर्तते । अयमेव अद्वैताद्वयपदार्थयोर्भेदः । करुणाकरन्, अद्वैतदर्शनम्, पञ्चम-विश्वसंस्कृतसम्मेलनम्, वाराणसी ।

३. तत्र जगदानन्दे ।

भक्तानां भवदद्वैतसिद्धये का नोपपत्तयः ।
तदसिद्ध्यै निकृष्टानां कानि नावरणानि वा ॥
(शिवस्तोत्रावल्याम्—१।१५)

उच्यते नाद्वयेऽमुष्मिन् द्वैतं नास्त्येव तत्त्वतः ।
उक्तं हि भेदवन्ध्येऽपि विधौ भेदावभासनम् ॥
( मालिनीविजयवार्तिके-१।१०८ )

अत एव हि भेदोऽस्ति न कश्चिद्यो महेश्वरम् ।
अद्वयं सम्प्रभिन्दीत प्रकाशानन्दसुन्दरम् ॥ ( तत्रैव—१।६२१ )

शक्तिश्च नाम भावस्य स्वरूपं मातृकल्पितम् ।
तेनाद्वयः स एवापि शक्तिमत्परिकल्पने ॥ ( तन्त्रालोके—१।६९ )

अद्वैतमेव न द्वैतमित्याज्ञा परमेशितुः[1] । (तत्रैव—२९।७४)

एतैर्वचनैरद्वयाद्वैतशब्दयोस्त्रिकदर्शने पर्यायतया प्रयोगो बौद्धवेदान्ताङ्गीकृताभिप्रायाद् भिन्नार्थक इत्यपि सिध्यति । वस्तुतः परतत्त्वविषये दृष्टिभेदादेव तत्तद्दर्शनेषु एतौ शब्दावर्थतो भिद्येते । वस्तुतो द्वैताद्वैतादिशब्दाः शिवाद्वये घटकुम्भवदेकार्थाः सन्ति । शब्दा भिद्यन्ते अर्थस्तु अपराहत एवाद्वयं साधयति ।

अस्यां भूमौ सुखं दुःखं बन्धो मोक्षश्चितिर्जडः ।
घटकुम्भवदेकार्थाः शब्दास्तेऽप्येकमेव च ॥
( तन्त्रालोके—२।१९ )

तथैव बोधपञ्चदशिकायाम् ( १४ )—

एतौ बन्धविमोक्षौ च परमेश्वरस्वरूपतः ।
न भिद्येते न मेरौ हि तत्त्वतः परमेश्वरे ॥

बौद्धाः सांवृतत्वेन वेदान्तिनश्चाविद्यया भेदमापादयन्ति । चिद्रूपस्य वास्तविकैकत्वे सर्वमेतद् न सङ्गच्छते । सत्यासत्यविभागो हेयोपादेयविभागः, शुद्ध्यशुद्धिविभागोऽद्वैतस्वीकारेऽवास्तविक एव । तद्भेदस्वीकारे वस्तुत आत्मवञ्चना, द्वैतपङ्कपात एव वा स्यात् । विधि-निषेध-भक्ष्याभक्ष्य-शुद्ध्यशुद्धिरूपविभागमपि त्रिकदार्शनिका

१. अद्वैतद्रवसम्पर्कात् सिद्धान्तवैष्णवाद्याः पराङ्मुखत्वमायान्ति । अयमर्थः श्रीजयरथेन 'स्वक्रमं तु यजेन्मध्ये द्वैताचारं तु वर्जयेत्' इत्यागमवचनमुद्धृत्य पद्यद्वयेन सिद्धान्तादीनां पशुत्वं निर्जीवत्वं च मन्त्रप्रसङ्गे शास्त्रोक्तपद्यद्वयेन निर्दिष्टम्—

सिद्धान्तवैष्णवबौद्धा वेदान्ताः स्मार्तदर्शनाः ।
ते प्रयत्नेन वा वर्ज्या यस्मात्ते पशवः स्मृताः ॥
अद्वैतद्रवसम्पर्कात् सन्निधानं व्यञ्जयन्ति ते ।
पराङ्मुखत्वमायान्ति निर्जीवाः जीववर्जिताः ॥ (तन्त्रालोकविवेके-२९।७४)

द्वैतबुद्धिजनकत्वान्न सहन्ते प्रतिवदन्ति च यदि प्रमात्रा शुद्धयशुद्धिविभागो वस्तुधर्मतयेष्यते, तर्हि न हि तदन्यथा कर्तुं शक्यते[1]। पृथिव्याः जलेन जलस्य पृथिव्या च शोधनेऽन्योन्याश्रयदोषः प्रसज्यते। अशुद्धेन अन्यदशुद्धं यदि शोध्यते तर्हि द्वयोरपि समानरूपत्वाद्वैयर्थ्यापत्तिः। यदि एकस्यापरेण द्रव्येण शुद्धिरापाद्यते तर्हि अनवस्था स्यात्। अतो न किञ्चिदपि शुद्धमशुद्धं वा। सर्वेषां शिवात्मकत्वान्न कुत्रापि वास्तविकमशुद्धत्वमापादनीयम्। वस्तुतः परिमितप्रमातैव स्वसंस्कारानुरूपं विधिनिषेधादिव्यवस्थां विकल्पबुद्ध्या दिक्कालानुरूपमुद्भावयति, न तत्र पार्यन्तिकं द्वैतमास्थेयम्। संविदद्वयप्रतिष्ठापकस्य शुद्धत्वं द्वैतबुद्धिजनकस्य चाशुद्धत्वमित्येव केवलमास्थातुं शक्यते[2]। भेदाभेदविरोधोऽप्यन्यैरद्वयवादिभिर्व्याख्यातुं न सुशकः। तथा हि त्रिकदर्शनविदः—

"अत एव भेदाभेदयोर्विरोधं दुःसमर्थमभिमन्यमानैरेकैरविद्यात्वेनानिर्वाच्यत्वमपरैश्चाभासलग्नतया सांवृतत्वमभिदधद्भिरात्मा परश्च वञ्चितः"।

( ईश्वरप्रत्यभिज्ञाविमर्शिन्याम्—२।३।१४ )

अन्यच्च तत्रैव ( २।४।२० )—

"चिद्रूपस्यैकत्वं यदि वास्तवं भेदः पुनरयमविद्योपप्लवादित्युच्यते, तदा कस्यायमविद्योपप्लव इति न सङ्गच्छते। ब्रह्मणो हि विद्यैकरूपस्य कथमविद्यारूपता। न चान्यः कश्चिदस्ति वस्तुतो जीवादिर्यस्याविद्या भवेत्"।

अत एवाहुर्महार्थमञ्जरीपरिमलटीकाकाराः—"तत्र हि अद्वैतमाग्रहेणोपपाद्यमानमपि द्वैतकक्ष्यामेवाधिरोहति यदत्र सत्यासत्यव्यवस्थया हेयोपादेयकल्पनायां तेनैवाकारेण द्वैतमर्यादायां पर्यवसायित्वमनिवार्यम्। ( परिमले, पृ० ५२ )

चिदात्मा स्वतन्त्रः ज्ञाता कर्ता शक्तिमान् शिवो महेश्वरः प्रकाशविमर्शात्मक इति त्रिकदार्शनिकाः प्रतिपद्यन्ते। स्वातन्त्र्यं कर्तृत्वं ज्ञातृत्वं शक्तिमत्त्वं विमर्शात्मकत्वं च वेदान्तब्रह्मणि नास्तीति प्रतिपादितमेव पूर्वम्। अत एव तत्रैश्वर्यं नास्तीति स्वयं भगवत्पादशङ्कराचार्या अस्मिन्नर्थे प्रमाणम्।

"तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्षमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तिमत्त्वं च। न परमार्थतो विद्ययाऽपास्तसर्वोपाधिस्वरूपे आत्मनीशित्रीशितव्यसर्वज्ञत्वादिव्यवहार उपपद्यते"। ( ब्रह्मसूत्रशाङ्करभाष्ये—२।१।१४ )

---

१. प्रमाता हि व्यवस्यति इदं शुद्धमिदमशुद्धमिति वस्तुधर्मत्वे हि अनयोरशुद्धं न कदाचिदपि शुद्ध्येत्, शुद्धमपि वा नाशुद्धं स्यात्। न हि नीलमनीलमपि कदाचिद् भवेत्, स्वभावस्यान्यथाकर्तुमशक्यत्वात्। (तन्त्रालोकविवेके—४।२२१)

२. विस्तरार्थं द्रष्टव्यम्—तन्त्रालोके—४।२१३-१५, २२४, २४३-४४।

'नेह नानास्ति किञ्चन' इति सर्वस्य निषेधे सर्वज्ञत्वं सर्वशक्तिमत्त्वं च न घटते। अत ईश्वरबुद्धिर्वेदान्तिनां मिथ्याज्ञाननिमित्ता मायीयाऽविद्याविजृम्भितेति च पर्यवस्यति। अनिर्वाच्या चेयमविद्या न सङ्गच्छत इत्याहुरभिनवगुप्तपादाः प्रत्यभिज्ञाविमर्शिन्याम् ( २।४।२८ )—

"अनिर्वाच्येयमविद्या इति चेत् । कस्यानिर्वाच्येति न विद्मः। स्वरूपेण च भाति न च निर्वाच्येति किमेतत्"।

सोमानन्दः शिवदृष्टौ विविधवेदान्तमतान्युल्लिख्य खण्डयित्वा च[1] सर्वेषां भावानां सर्वात्मकतां शिवरूपतां च साधयति—

सर्वे सर्वात्मभावेन सर्वज्ञा वा व्यवस्थिताः ।
सर्वे भावाः स्वमात्मानं जानन्तः सर्वतः स्थिताः ॥ ( ५।१०४ )

---

१. शिवदृष्टौ षष्ठाह्निके—
यथा प्रकल्पिता चित्रा चित्रब्रह्मादिवादिता ।
नानात्मवादितां यावत् तत्सर्वं प्रविचार्यताम् ॥ ३ ॥
यत्र ब्रह्मोच्यते चित्रं कैश्चिद्वेदान्तवादिभिः ।
एकस्य चित्रता केन हेतुना ब्रह्मणो भवेत् ॥ ४ ॥
येऽन्ये वेदान्तविद्वांस आत्मब्रह्मैव विश्वताम् ।
यात्युपादानरूपत्वात् तथान्ये भ्रान्तिरूपताम् ॥ ८ ॥
विश्वं न सत्यरूपत्वं तथान्ये त्वात्मवादिनः ।
भूतजीवपरात्मत्वं ये चान्ये नेतिवादिनः ॥ ९ ॥
यस्यां प्रतीतौ नेत्यस्य प्रसरो न प्रवर्तते ।
तद्ब्रह्मेति वदन्त्येके ये स्फुलिङ्गात्मवादिनः ॥ १० ॥
प्रतिबिम्बतया चान्ये ये वा सर्गमुखे स्वयम् ।
ब्रह्मैव गृह्णात्यात्मानं ततो भेदोपपादनम् ॥ ११ ॥
इत्याहुर्येऽपि क्रीडार्थमेवमात्मा व्यवस्थितः ।
इत्यूचुर्येऽप्रबुद्धत्वं पश्चाद् ब्रह्म प्रबुध्यते । १२ ।
देहे देहे पृथक्त्वं तु तथा भेदो भवात्मकः ।
जलधारांशुमन्न्यायो येषां वा समवस्थितः ॥ १३ ॥
अविद्यां वेत्त्यविद्यैव बध्नात्यात्मानमेव वा ।
सैवेति वादो येषां वा तेषां वेदान्तवादिनाम् ॥ १४ ॥
सर्वेषामविद्यैव कल्प्या ब्रह्मणि संगता ।
तथा भावेष्वसत्यत्वमित्यवश्यमवस्थितम् ॥ १५ ॥

अन्यच्च—

सर्वे सर्वात्मका भावाः सर्वसर्वस्वरूपतः ।
सर्वस्य सर्वमस्तीह नानाभावात्मरूपकैः ॥
मद्रूपत्वं घटस्यास्ति ममास्ति घटरूपता ।
नानाभावैः स्वमात्मानं जानन्नास्ते स्वयं शिवः ॥
चिद्व्यक्तिरूपकं नानाभेदभिन्नमनन्तकम् ।
एवं सर्वेषु भावेषु सर्वसाम्ये व्यवस्थिते ॥
तेन सर्वगतं सर्वं शिवरूपं निरूपितम् ॥
( शिवदृष्टौ—५।१०७-११० )

अयमर्थः सर्वसाम्यवादात्मकः सोमानन्देन बहु प्रपञ्चितः । तथा ह्यन्यत्र—

एवं सर्वपदार्थानां समैव शिवता स्थिता ।
परापरादिभेदोऽत्र श्रद्दधानैरुदाहृतः ॥ ( तत्रैव—१।४८ )
तस्मात्समग्राकारेषु सर्वासु प्रतिपत्तिषु ।
विज्ञेयं शिवरूपत्वं स्वशक्त्यावेशनात्मकम् ॥ ( तत्रैव—३।१७)

अतः सर्वेषां भावानां ज्ञातृज्ञानज्ञेयादीनां च साम्यं शिवरूपत्वं च वास्तवमद्वयं त्रिकशासने ।

यतो हि चिदात्मा देवः स्वस्वातन्त्र्यशक्त्या निरुपादानं विश्वमुन्मीलयति ततस्तस्यैश्वर्यमपराहतम् । अत एवाहुरुत्पलाचार्याः—"अन्तःस्थितमेव विश्वं बाह्यतया निरुपादानं प्रकाशयति" । (ईश्वरप्रत्यभिज्ञायाम्—१।५।७)

कूटस्थनित्यनिर्विकारस्थितिर्निर्विमर्शात्मिका सती न केवलमैश्वर्यमपि तु चैतन्यमपि निरसेत् । तथा हि अभिनवगुप्तपादाः—

अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः ।
महेश्वरत्वं संवित्त्वं तदत्यक्ष्यद्घटादिवत् ॥ (तन्त्रालोके–३।१००-१)

सकलं जगदाभास्यात्मनि च सततं प्रतिबिम्बतया व्यवस्थाप्य महेश्वरः परमार्थतो व्यवहारतश्च अद्वय एवास्ते—

निर्मले मुकुरे यद्वद् भान्ति भूमिजलादयः ।
अमिश्रास्तद्वदेकस्मिंश्चिन्नाथे विश्ववृत्तयः ॥ (तन्त्रालोके—३।४ )

अयमभेदसारो भेदनिर्वाहकः प्रतिबिम्बवादः परमार्थसारे विशदं विवृतोऽभिनवगुप्तपादैः—

दर्पणबिम्बे यद्वन्नगरग्रामादिचित्रमविभागि ।
भाति विभागेनैव च परस्परं दर्पणादपि च ॥
विमलतरपरमभैरवबोधात्तद्वद्विभागशून्यमपि ।
अन्योऽन्यं च ततोऽपि च विभक्तमाभाति जगदेतत् ॥
( परमार्थसारे—१२-१३ )

अतो भेदप्रसरे सत्यपि 'सर्वो ममायं विभवः' न तु मत्प्रतियोगिको मिथ्यारूपो वेति बुद्धया ईश्वराद्वयवादोऽपरीक्षितस्तिष्ठति । तथा हि आचार्योत्पलः—

सर्वो ममायं विभव इत्येवं परिजानतः ।
विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता ॥
( ईश्वरप्रत्यभिज्ञाकारिकायाम्—४।१।१२ )

अयमत्र प्रश्नः समुज्जृम्भते शक्तिमान् शिवः अनन्तशक्तिखचितत्वादेव स हि महेश्वरः । स्वातन्त्र्यशक्तिश्च सर्वशक्त्याक्षेपकत्वात् प्रधानं किन्तु शक्तिशक्तिमद्द्वय-स्वीकारे कथमीश्वराद्वयवाद आस्थीयते ? अत्र विवेककारस्य ( १।६९ कारिकास्थं ) व्याख्यानं स्पष्टमुत्तरम्—

"यतो भावस्य यस्य कस्यचन सतः पदार्थस्य स्वमेव रूपं फलभेदाद् भेदारोपेण शक्तिरिति प्रमातृभिः परिकल्प्यते, न त्वसौ वस्तुतः पदार्थान्तरं किञ्चित्, अतः शक्ति-शक्तिमत्परिकल्पने क्रियमाणेऽपि, स एवाद्वयमयो विभुः, न काचिदद्वयखण्डना इति"। तदुक्तम् --

"फलभेदादारोपितभेदः पदार्थात्मा शक्तिः । शक्तीनामपि परस्परं भेदो नास्ति । यतो हि—परमेश्वरस्य परिकल्पितेऽपि शक्तोनामानन्त्ये न कश्चिद्भेद इति न कदा-चिदीश्वराद्वयवादक्षतिः" ( विवेके—१।७० ) ।

भासमानश्च भेदो भानैकस्वभावान्नातिरिच्यत इति नाद्वयवादक्षतिः। परमेश्वरस्येच्छाद्यवान्तरशक्तयः स्वातन्त्र्याख्यशक्त्यैकरूपा इति निश्चयः । तथा हि अभिनवगुप्तपादाः —

एक एवास्य धर्मोऽसौ सर्वाक्षेपेण विद्यते ।
तेन स्वातन्त्र्यशक्त्यैव तदैश्वर्यं, परमेशितुः ॥ ( तन्त्रालोके—१।१० )

इयं ह्यवान्तरशक्तिसहस्रसमाढ्या स्वातन्त्र्यशक्तिस्तत्तद्भेदोद्भासेऽपि पर-प्रकाशाभिन्नस्वभावा भासते । न केवलमियं शक्तिरपि तु शिवः स्वयमेवाविलुप्तविभवः सन् प्रमेयतामापादित इवावभासते ।

स्वातन्त्र्याद्द्वयात्मानं स्वातन्त्र्याद्भावनादिषु ।
प्रभुरीशादिसङ्कल्पैर्निर्माय व्यवहारयेत् ॥
( ईश्वरप्रत्यभिज्ञाकारिका—१।५।१५ )

एवं शक्तिर्गुणो धर्मोऽवच्छेदकमुपाधिरंशो विभूतिर्वा नास्ति। सा हि स्वरूपं शिवस्य। तत एव शैवा बौद्धसम्मतं वेदान्तसम्मतं वाऽद्वैतं न सहन्ते। यथाहुः—

"अन्तर्गतविश्ववीर्यमुच्छलत्सत्तात्मकं विसर्गविश्लेषानन्दशक्त्येकघनं ब्रह्म बृहद् व्यापकं बृंहितं च, न तु वेदान्तपाठकाङ्गीकृतकेवलशून्यवादाविदूरवर्ति ब्रह्मदर्शनम् इदम्"। ( परात्रिंशिकाविवृतिः, पृ. २२९ )

सर्वसाम्यवादमूलेनेश्वराद्वयसमाश्रयणेन घटादिविषयकव्यवहारोऽपि परमेश्वर-स्वरूपानुप्रवेशोऽविरोधी सम्पद्यते। तथा हि अभिनवगुप्तपादाः —

"सर्वथा तावदत्र प्रमेये भगवत एव भेदने चाभेदने च स्वातन्त्र्यं घटगताभास-भेदाभेददृष्टिरेव च परमार्थाद्वयदृष्टिप्रवेशे उपायः समवलम्बनीयः, न तु व्यवहारोऽप्ययं परमेश्वरस्वरूपानुप्रवेशविरोधी इति प्रतिपादितम्"।

( ईश्वरप्रत्यभिज्ञाविमर्शिनी, २।३।१३ कारिकास्था )

अत्र भास्करीटीकाकारः —

"घटादिविषयो व्यवहारोऽपि परमेश्वरस्वरूपे योऽनुप्रवेशस्तस्य विरोधी न भवति तद्द्वारेणापि तत्स्वरूपपर्यंषणरूपेण तत्सारभूतपरमेश्वरतत्त्वलाभात्"।

वेदान्तादिनिर्णीताद्वयाभासस्य बाह्यव्यवहारं प्रत्युपेक्षाभावमपेक्ष्य परमार्थ-पदग्रहणम्[1]। बादरायणस्य ब्रह्मसूत्राणि ( १।१।२–३, १।२।१८, २।१।६, २।१।९, २।१।२४ ) ब्रह्म जगज्जन्मादिकारणं शास्त्रयोनिश्चेति प्रतिपादयन्ति, जगतः मिथ्यात्वं खण्डयन्ति ( २।१।३३ ), तस्य कर्तृत्वं ज्ञातृत्वं च समर्थयन्ति ( २।१।२२, २।३।१८,३३), यज्ञादिक्रियानिष्पत्त्यै समाधिलाभार्थं च ब्रह्मणः कर्तृत्वमावश्यकमिति निर्दिशन्ति ( २।३।३९ )। अतो ब्रह्मसूत्रकृता वेदान्तमीमांसा न त्रिकसम्मतमर्थं विरुणद्धि। तत एवानेकानि उपनिषद्वाक्यानि शैवशास्त्रकारैः सादरमुद्ध्रियन्ते।

अत्रायं पिण्डितार्थः—निर्विशेषाद्वैतवादिनां शाङ्करवेदान्तिनां ब्रह्म नित्यशुद्ध-मुक्तस्वभावतया प्रकाशैक घनमपि जडमणिरिव निर्विमर्शमेव। अविद्याकृतं च द्वैतं तदद्वयं कलुषीकरोति। सेश्वरसांख्यानामीश्वरो पुष्करपलाशवत् सृष्टेर्निरपेक्षः। 'न प्रकृतिर्न विकृतिः पुरुषः' इति सांख्यकारिकोक्तेः सृष्टेः प्रकृत्युपादानतया ज्ञानस्य च बुद्धिधर्मतया तस्याकर्तृकत्वमज्ञातृत्वं च सुतरा मापततः। सहकारिकारणपरतन्त्रस्य न्यायवैशेषिकाभिमतस्येश्वरस्य सर्वज्ञत्वं सर्वकर्तृत्वं जगदुपादानत्वं वा न घटते। सर्वं क्षणिकमुद्घोषयन्तः चित्तचैत्त-निषेधरसिकाः सौगताः प्रकाशविमर्शात्मकमनन्तशक्तिसमाढ्यं परतत्त्वं न प्रतिष्ठा-पयन्ति। कर्ममीमांसकानां जैमिनीयानां वेदाभ्यासजाड्यजनितं निरीश्वरवादित्वं सुप्रथितमेव। आश्रितश्च तैर्भेदवादः। स्यात्सरिति सपदि सप्तशो भङ्गीभिर्निमज्जता-

१. वेदान्तखण्डनार्थं द्र. भास्करी, पृ० १०-१५।

मुन्मज्जतां च स्याद्वादिनां नये उत्पादव्ययध्रौव्यादिरूपं द्रव्यमिति तत्र प्रकाशविमर्शात्मकं विश्वोत्तीर्णं विश्ववपुश्च न निर्णीयते। अतस्त्रिकदर्शनाभिमत ईश्वराद्वयवादः सर्ववादविलक्षणः। अस्ति च तस्यान्यैर्दर्शनैः सह विरोधः[1]। अत एव प्रत्यभिज्ञाहृदये ( सूत्रं ८ ) आत्मतत्त्वमुपादाय दर्शनान्तरैः सह भेदः प्रकटितः। तच्चेत्थम्—

"चैतन्यविशिष्टं शरीरमात्मा इति चार्वाकाः। नैयायिकादयो ज्ञानादिगुणगणाश्रयं बुद्धितत्त्वप्रायमेवात्मानं संसृतौ मन्यन्ते। अपवर्गे तु तदुच्छेदे शून्यप्रायम्। अहंप्रतीतिप्रत्येयसुखदुःखाद्युपाधिभिस्तिरस्कृत आत्मेति मन्वाना मीमांसका अपि बुद्धावेव निविष्टाः। ज्ञानसन्तान एव तत्त्वम् इति सौगता बुद्धिवृत्तिष्वेव पर्यवसिताः। प्राण एवात्मेति केचित् श्रुत्यन्तविदः। असदेव इदमासीदित्यभावब्रह्मवादिनः शून्यभुवमवगाह्य स्थिताः। माध्यमिका अपि एवमेव। परा प्रकृतिर्भगवान् वासुदेवः, तद्विस्फुलिङ्गप्राया एव जीवा इति पाञ्चरात्राः परस्याः प्रकृतेः परिणामाभ्युपगमाद् अव्यक्त एवाभिनिविष्टाः। सांख्यादयस्तु विज्ञानाकलभूमिम् अवलम्बन्ते। सदेव इदमग्र आसीद् इतीश्वरतत्त्वपदमाश्रिता अपरे श्रुत्यन्तविदः। शब्दब्रह्ममयं पश्यन्तीरूपमात्मतत्त्वमिति वैयाकरणाः श्रीसदाशिवपदमध्यासिताः। एवमन्यदपि अनुमन्तव्यम्"। एतदेव प्रकारान्तरेणान्यत्रापि विततम्। उक्तं चागमे—

बुद्धितत्त्वे स्थिता बौद्धा गुणेष्वेवार्हताः स्थिताः।
स्थिता वेदविदः पुंसि अव्यक्ते पाञ्चरात्रिकाः॥

वैष्णवाद्यास्तु ये केचिद्विद्यारागेण रञ्जिताः।
न विदन्ति परं देवं सर्वज्ञं ज्ञानशालिनम्॥

'मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि सः' इत्यभियुक्तोक्त्या मोक्षस्यात्मज्ञानरूपत्वादात्मस्वरूपनिरूपणेन दर्शनान्तरेष्वास्थितं मोक्षस्वरूपं[2] प्रकटीभवति। तच्च परमशिवत्वलाभाय पूर्णाहन्ताप्रथायै वा नालं भवत्यतो नैरात्म्यवादिनो बौद्धादयो बुद्धितत्त्वान्तबन्धविगलनान्मुक्ता अपि तदूर्ध्ववर्त्यध्वान्तरावच्छेदस्थितेरमुक्ता एव"[3]। तथैव श्रीसदाशिवपदपर्यन्तमास्थितानामात्मवादिनामपि न शिवत्वलाभः। अत एवाहुरभिनवगुप्तपादाः —

---

१. i) नानादर्शनैश्चास्मिन् शैवाद्वैते नो विरोधः। (शिवदृष्टिवृत्तौ, पृ० १२२)
(ii) न हि सर्वत्र दर्शने सर्वैरर्थैस्तुल्यैर्भाव्यम्। (तत्रैव, पृ० १६३)

२. इह तावदात्मज्ञानं मोक्ष इत्यविवादः। अतो यदेवात्मनो लक्षणं तदेव मोक्षस्य इति तन्नान्तरीयकत्वादेवास्य लक्षणसिद्धेः। (तन्त्रालोकविवेके—१।३१)

३. तत्रैव—१।३४।

सांख्यवेदादिसंसिद्धाञ्छ्रीकण्ठस्तदहर्मुखे ।
सृजत्येव पुनस्तेन न सम्यङ्मुक्तिरीदृशी[1] ॥
( तन्त्रालोके —६।१५२ )

तत्र "अज्ञानं संसृतेर्हेतुर्ज्ञानं मोक्षैककारणम्" ( तन्त्रालोके—१।२२ ) इति सर्वेषु शास्त्रेषु परिगीयते। अज्ञानं हि सामस्त्येनाप्रथात्मकमपूर्णख्यातिरूपं च। त्रिकदर्शनानुसारं ज्ञानमज्ञानं च द्विविधं पौरुषं बौद्धं च[2] । अत्र पौरुषमज्ञानमेव संसारहेतुतया निर्दिष्टम्। अज्ञानशब्दस्यापूर्णं ज्ञानमर्थो न तु ज्ञानाभावः, अन्यथा ज्ञानाभाववति लोष्टादिकेऽपि तस्य प्रसक्त्या तत्रापि संसरणकथा व्यासज्येत्। तदुक्तं तन्त्रालोके—

अज्ञानमिति न ज्ञानाभावश्चातिप्रसङ्गतः।
स हि लोष्टादिकेऽप्यस्ति न च तस्यास्ति संसृतिः॥

अज्ञानमेवागमेषु मलं तच्च—आणवं मायीयं कार्मं चेति त्रिविधमुपदिष्टम्[3] । अणुभावं संकोचमापादयद् अणौ परिमितप्रमातरि जायमानमणुना सम्बद्धं वा प्रथममाणवं मलं पूर्णज्ञत्वस्य कर्तृत्वस्य चापहस्तनेन द्विविधम्। तदुक्तम्—

स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता ।
द्विधाणवं मलमिदं स्वस्वरूपापहानितः ॥
( ईश्वरप्रत्यभिज्ञाकारिका—३।२४ )

---

१. श्रीस्वच्छन्दशास्त्रेऽपि—

लौकिकानां पुनः सृष्टिः पुनः संहार एव च ।
संसारक्रमारूढा भवन्ति घटयन्त्रवत् ॥

इत्यादि सामान्येन अभिधाय—

मुक्तं च प्रतिबन्धात्तं पुनर्बध्नाति चेश्वरः ।
बन्धः संसारतो भूयो यावद्देवं न विन्दति ॥ ( तत्रैव—११।३४ )

दर्शनान्तरप्रसिद्धमुक्तिस्वरूपाणामसम्यक्त्वविवेचनार्थं तन्त्रालोकविवेको द्रष्टव्यः, १।३३।

२. ज्ञानाज्ञानस्वरूपं यदुक्तं प्रत्येकमप्यदः ।
द्विधा पौरुषबौद्धत्वभिदोक्तं शिवशासने ॥
तत्र पसो यदज्ञानं मलाख्यं तज्जमप्यथ ।
स्वपूर्णचित्क्रियारूपं शिवतावरणात्मकम् ॥
संकोचिदृक्क्रियारूपं तत् पशोरविकल्पितम् ।
तदज्ञानं न बुद्धयंशोऽध्यवसायाद्यभावतः ॥ (तन्त्रालोके—१।३६–३८)

३. (i) मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम् ।
इति प्रोक्तं तथा च श्रीमालिनीविजयोत्तरे ॥ (तन्त्रालोके—१।२३)

(ii) अज्ञानं किल बन्धहेतुरुदितः शास्त्रे मलं तत्स्मृतम् । (तन्त्रसारे—आ. १, पृ० ५)

स्वस्वरूपहानौ सत्यां भिन्नवेद्यप्रथनमेव मायीयं मलम्। देहादेर्भिन्नप्रथने सति तद्द्वारा क्रियमाणं धर्माधर्मरूपं कार्मं मलम्। प्रथमं स्वरूपसंकोचः, तदनु देहाध्यासस्तदनु कर्तृत्वाभिमानेन धर्माधर्मकर्तृत्वमिति क्रमः। सर्वमेतन्मायाशक्त्यैव क्रियत इति मलत्रयस्यापि मायीयता[1]। आणवं मलमन्तरङ्गम्, मायासहितं कञ्चुकषट्कं मायीयं मलं सूक्ष्मम्, देहादिरूपं स्थूलं बाह्यं च कार्ममलं[2] कोशत्रयमात्मनः[3]। तेनैवायमणुरिति जीव इति पशुरिति वा व्यवह्रियते। परमेश्वरः स्वात्मप्रच्छादनक्रीडापण्डितः, अतो मलमागमेषु स्वात्मप्रच्छादनक्रीडामात्रं विदन्ति[4]। निरतिशयनिर्मलस्य मलिनीभावः, पूर्णस्यापूर्णतया प्रथनं स्वातन्त्र्येण विजृम्भितं योग्यतामात्रमिति न मलत्रयस्य रागवत् तत्त्वान्तरत्वमाशङ्क्यम्। तदेवाह—

योग्यतामात्रमेवैतद् भावव्यवच्छेदसङ्ग्रहे।
मलस्तेनास्य न पृथक् तत्त्वभावोऽस्ति रागवत्॥

(तन्त्रालोके—९।६३)

एतन्मलत्रयस्य इच्छा-ज्ञान-क्रियाशक्तीनां संकोचेन संग्रहेण विवेचनं प्रत्यभिज्ञाहृदयकारेण (पृ. ६०) कृतम्। तच्चेदम्—

"अप्रतिहतस्वातन्त्र्यरूपा इच्छाशक्तिः संकुचिता सती अपूर्णम्मन्यतारूपमाणवं मलम्। ज्ञानशक्तिः क्रमेण संकोचाद् भेदे सर्वज्ञत्वस्य किञ्चिज्ज्ञत्वप्राप्तेः अन्तःकरणबुद्धीन्द्रियतापत्तिपूर्वमत्यन्तं संकोचग्रहणेन भिन्नवेद्यप्रथारूपं मायीयं मलम्। क्रियाशक्तिः क्रमेण भेदे सर्वकर्तृत्वस्य किञ्चित्कर्तृत्वाप्तेः कर्मेन्द्रियरूपसङ्कोचग्रहणपूर्वकम् अत्यन्तपरिमितततां प्राप्ता शुभाशुभानुष्ठानमयं कार्ममलम्"।

तत्र स्वातन्त्र्यहानिरूपमाणवं मलं विज्ञानकेवलनाम्नि प्रमातरि, स्वातन्त्र्याबोधरूपमाणवं कार्मं विकल्पेन च मायीयं मलं प्रलयाकलनाम्नि प्रमातरि देवादिषु च सर्वेषु भविषु (संसारिषु) त्रिविधं[5] मलमिति ईश्वरप्रत्यभिज्ञाकारिकायां तद्विमर्शिन्यां (३।२।६-१०, भास्करी, भा. २, पृ. २५०-२५५) च स्पष्टीकृतम्। ज्ञानेन मोक्ष इति

१. भिन्नवेद्यप्रथात्रैव मायाख्यं जन्मभोगदम्।
कर्तृत्वबोधे कार्मं तु मायाशक्त्यैव तत्त्रयम्॥ (तन्त्रसारे—(३।२-५)

२. मलशब्दस्य पुंनपुंसकयोः प्रयोगः।

३. परमावरणं मल इह सूक्ष्मं मायादिकञ्चुकं स्थूलम्।
बाह्यं विग्रहरूपं कोशत्रयवेष्टितो ह्यात्मा॥ (परमार्थसारे—२४)

४. स्वात्मप्रच्छादनक्रीडामात्रमेव मलं विदुः।

५. देवादीनां च सर्वेषां भविनां त्रिविधं मलम्।
तथापि कार्ममेवैकं मुख्यं संसारकारणम्॥ (ईश्वरप्रत्यभिज्ञाकारिका—३।२।१०)

सर्वशास्त्रसम्मतम्। वेदान्तिनो ब्रह्मणि अज्ञाननाशायैव वृत्तेर्व्याप्तिं मन्यन्ते फलव्याप्ततां त्वस्या निवारयन्ति[1]। त्रिकदर्शनं ज्ञानं नाम प्रत्यभिज्ञेति व्यवस्थापयति। ज्ञातस्यापि विशेषतो निरूपणम् अनुसन्धानात्मकम्, तयोरैक्यप्रतिपत्तिः, आभिमुख्येन प्रकाशो वा प्रत्यभिज्ञेति लक्षयन्ति। तदुक्तम्—

"प्रतीपमात्माभिमुख्येन ज्ञानं प्रकाशः प्रत्यभिज्ञा। प्रतीपं स्वात्मावभासो हि न अननुभूतपूर्वोऽविच्छिन्नप्रकाशकत्वात् स तु तच्छक्त्यैव विच्छिन्न इव विकल्पित इव लक्ष्यते। प्रत्यभिज्ञा च भातभासमानरूपाऽनुसन्धानात्मिका। स एवायं चैत्र इति प्रतिसन्धानेनाभिमुखीभूते वस्तुनि ज्ञानम्"।

(ईश्वरप्रत्यभिज्ञाविमर्शिन्याम्, भा. १, पृ. ३७)

स्वात्मा सर्वदा सन्निहित इति तस्य चैत्रस्येव मध्ये वियोगो नात्र न्यायनय इव कल्पनीयः। अपूर्णतया ज्ञातस्य प्रत्यक्चैतन्यस्य पूर्णताप्रथनमेवात्र प्रत्यभिज्ञा। सा च बाह्यप्रमेयमूलान्वेषणेन प्रमातृविश्रान्तिमनुसन्दधाति। तदुक्तम्—

"स्फुटतरं भासमाना ये नीलसुखादयस्तेषां प्रमाया अन्वेषणेन किं मूलेति विचारणेन बाह्यप्रमाविचारे क्रियमाणे तन्मूलभूतस्य प्रमातुरयत्नं सिद्ध्यति घटान्वेषणेन मृदः"। (तत्रैव, पृ. ३९) बाह्यविषयकप्रमायाः परिमितप्रमातरि तस्य च परमप्रमातरि प्रत्यभिज्ञानाज्जीवेश्वरयोरैक्यफला भवति प्रत्यभिज्ञा। तदैक्यं च ईश्वरस्वरूपस्वात्मप्रत्यभिज्ञान्नातिरिच्यते। वेद्यवेदकवेदनरूपतयेच्छाज्ञानक्रियादिभिश्च सततं सन्निहितोऽपि स्वात्मा पूर्णतया अपरिज्ञातत्वाद्रतिं नानुबध्नाति, आन्तरीं प्रीतिञ्च न जनयति। प्रत्यभिज्ञा न खलु बाह्यार्थक्रिया या प्रत्यभिज्ञानं विनैव सहकारिसाकल्ये सति कार्यं जनयति। यथा बीजमप्रत्यभिज्ञातं सदप्यङ्कुरं जनयति। इयन्तु प्रमातृविश्रान्तिचमत्कारसारा प्रीत्यादिरूपाऽऽन्तरी स्फुरत्ता[2]। यथा तन्व्या अन्तिके स्थितोऽपि जननिर्विशेषतया परिज्ञातः कान्तो रतिं न बध्नाति स एव केनाप्युपायेन प्रत्यभिज्ञातः सन् निरतिशयप्रेमपात्रं भवति तयोः सामरस्यं चानुभावयति, तथैव मोहापसारणेन प्रत्यभिज्ञातः सन्

---

१. फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता॥ (श्यामपञ्चदश्याम्—६।९०)

२. न हि बीजमप्रत्यभिज्ञातं सति सहकारिसाकल्ये नाङ्कुरं जनयति, तत् क्व आत्मप्रत्यभिज्ञाने निर्बन्ध उच्यते? द्विविधा अर्थक्रियाऽस्ति, बाह्या चाङ्कुरादिका, प्रमातृविश्रान्तिचमत्कारसारा च प्रीत्यादिरूपा। तत्र आद्या सत्यं प्रत्यभिज्ञानं नापेक्षते, द्वितीया तु तदपेक्षत एव। (ईश्वरप्रत्यभिज्ञाविमर्शिन्याम्—४।१।१६।)

स्वात्मा विश्वेश्वरः पूर्णाहन्ताचमत्कारं वितनोति[1]। इदमेव प्रत्यभिज्ञानं 'स्वशक्त्याविष्करणम्' स्वशक्त्यभिव्यक्तेर्मोहापसारणेनेश्वरस्वरूपपरामर्शो वा व्यपदेष्टुं शक्यते। तदुक्तम्—

किन्तु मोहवशादस्मिन्दृष्टेऽप्यनुपलक्षिते ।
शक्त्याविष्करणेनेयं प्रत्यभिज्ञा प्रदर्श्यते ॥
( ईश्वरप्रत्यभिज्ञाकारिका— १।१।२ )

पूर्णताप्रत्यभिज्ञां कर्तुं परमशिवत्वलाभाय च त्रिकशास्त्रेषु भेददृष्टिप्रधान आणवोपायः, भेदाभेददृष्टिप्रधानः ज्ञानोपायः, अभेददृष्टिप्रधानः शाम्भवोपाय इति चत्वार उपाया उपदिष्टाः। तत्र प्रथमे क्रियायाः, द्वितीये ज्ञानस्य, तृतीये च इच्छायाः प्राधान्यादेते त्रय उपायाः क्रमेण क्रियोपायः, ज्ञानोपायः, इच्छोपायश्चेति कथ्यन्ते। शाम्भवोपाय[2] एव परां काष्ठामधिरूढः आनन्दविश्रान्तः 'अनुपाय' इत्यभिनवगुप्तेनोपदिष्टः। अत्र ईषदर्थे नञ्प्रयोगः[3], तदुक्तम्—"अयमेव पारमेश्वरसमावेशयोगः। समस्तमिदमेकं चिन्मात्रतत्त्वं कालेनाकलितम्, देशेनापरिच्छिन्नम्, उपाधिभिरम्लानम्, आकृतिभिरनियन्त्रितम्, ... ...स्वतन्त्रं तत्त्वं तदेवाहम्। तत्रैवान्तर्मयि विश्वं प्रतिबिम्बितम्, एवं दृढं विविञ्चानस्य पारमेश्वरः समावेशो निरूपायक एव। तस्य च न मन्त्रपूजाध्यानचर्यादियन्त्रणा काचित्"। (तन्त्रसारे, पृ० ९ ) अनुपाय एव परमं ज्ञानमनुत्तरमिति प्रत्यभिज्ञाप्रक्रियायां संज्ञितम्। तथा हि—

ततोऽपि परमं ज्ञानमुपायादिविवर्जितम् ।
आनन्दशक्तिविश्रान्तमनुत्तरमिहोच्यते ॥ (तन्त्रालोके--१।२४२)

क्रमसम्प्रदाये आणवोपाय आश्रीयते यत्र "उच्चारकरणध्यानवर्णस्थानप्रकल्पनैः[4]" समावेशः साध्यते। तत्रापि संवित्सन्निकृष्टतया प्राणोच्चारस्यान्तरङ्गत्वं

---

१. तैस्तैरप्युपयाचितैरुपनतस्तन्व्याः स्थितोऽप्यन्तिके कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा। लोकस्यैष तथाभिनवेक्षितगुणः स्वात्मापि विश्वेश्वरो नैवालं निजवैभवाय तदियं तत्प्रत्यभिज्ञोदिता। (प्रत्यभिज्ञाकारिका—४।१।१७)

२. शाम्भवोपायस्वरूपम्—

मत्त एवोदितमिदं मय्येव प्रतिबिम्बितम् ।
मदभिन्नमिदं चेति त्रिधोपायः स शाम्भवः ॥ (तन्त्रालोके—३।२८०)

३. अनुपाय इति नोपायनिषेधमात्रम्। (तन्त्रालोकविवेके--१।४२)

४. उच्चारकरणध्यानवर्णस्थानप्रकल्पनैः ।
यो भवेत् स समावेशः सम्यगाणव उच्यते ॥ (मालिनीविजयोत्तरतन्त्रे—२।२१)
अस्य विस्तरेण विवेचनं तन्त्रालोके ५, ६, ११, १६, २९, ३२ आह्निकेषु कृतम्।

देहगतकरणादेश्च बहिरङ्गत्वमास्थीयते[1] । अस्मिन्नेवाणवोपाये विज्ञानभैरवोपदिष्टा धारणाः, कुण्डलिनीयोगः शैवध्यानविधयः, साधनाया रहस्यविधयो बाह्यपूजायाः समग्रं कर्मकाण्डादिकं सर्वं सङ्गृह्यते । त्रिकदर्शननिरूपणमात्रपरत्वेन नात्र मया साधना-स्वरूपं साधकैकसंवित्तिस्फुरणगोचरं मनागप्युन्मील्यते । न तत्र मेऽधिकारो योग्यता वा । तथापि सामान्यदृशा शास्त्रशब्दगम्यं साधनास्वरूपं सङ्गृह्य यत् किञ्चित् "काश्मीर की शैव-परम्परा" इत्याख्ये ग्रन्थे मनाक् शिवानुग्रहेण स्पृष्टमिति तत एवाव-लोकनीयम् ।

चिदेकरूपोऽप्यन्यापोहरूपत्वाद् भेदमयो नीलादिविकल्पः । तमभ्यासातिशात् क्रमेण संस्कृत्य[2] संविदो विमला पूर्णाविकल्पस्फुटतावाप्तिरेव शाक्तोपायः[3] । तथा हि विवेकः ( ५।५ )—"संस्कारश्चास्यास्फुटत्वादिक्रमेण स्फुटतमत्वापत्तिपर्यन्तं पार-मार्थिकस्वात्मप्रत्ययरूपनिर्विकल्पज्ञानात्मत्वासादनम्" । अधिकारिभेदादुपायचातुर्विध्य-प्रदर्शनेऽपि उपायनानात्वं तत्कृतश्च फलभेदो नाशङ्कनीयः । ज्ञानात्मकस्यैवोपायस्य मोक्षावाप्तावभ्युपगतत्वात्[4] । परमार्थतस्तु निरवच्छिन्नप्रकाशः परमात्मा सर्वत एवाव-

---

१. केचिदुपायाः संविदि सन्निकृष्टाः केचिच्च विप्रकृष्टाः'''इति नीत्या बुद्ध्याद्यपेक्षया तत्र प्राणस्यान्तरङ्गत्वात्, तद्गतमुच्चारादिसन्निकृष्टं तदपेक्षया च बुद्धिगतं ध्यानं विप्रकृष्टम्, ततोऽपि देहगतं करणादि । ''' तेनाणुषु भेदिषु उपायेषु भव इत्याणव''' । (तन्त्रालोकविवेके—५।६)

२. स्वात्मसंवित्तेर्निरतिशयपूर्णत्वान्न किञ्चिदपि तत्र अपास्यमाधेयं वा सम्भवति, अत एवानुपायाह्निके "अत्र तावत् क्रियायोगो नाभ्युपायत्वमर्हति" इति स्पष्टीकृतम् । तथापि स्वात्मप्रच्छादनक्रीडापण्डितस्य अनावृतस्वरूपेऽपि यत् स्वाच्छन्द्येनात्माच्छादनं मायया क्रियते, तेन द्वैतम् उद्भाव्यते तद्द्वैतस्यापासनमेवात्र संस्कारो विवक्षितः । स च स्फुटताभावि-प्रस्फुटन्-स्फुटितात्मक-स्फुटतमरूपेण चतुर्धा । स च द्वैतपादपः सत्तर्ककुठारेण छिन्द्यते । सत्तर्कश्च प्राणायाम-ध्यान-प्रत्याहार-धारणा-तर्कसमाधिरूपस्य शैवशास्त्रो-पदिष्टस्य षडङ्गयोगस्योत्तममङ्गम् । धाराधिरूढस्तर्क एव परां काष्ठामुपगतो भावनेति व्यपदिश्यते । भावनामयमेव च परमं ज्ञानमिति सर्वं शाक्तोपायनिरूपके तन्त्रालोकस्य चतुर्थाह्निके निरूपितम् ।

३. ततः स्फुटतमोदारताद्रूप्यपरिबृंहिता ।
संविदभ्येति विमलामविकल्पस्वरूपताम् ॥ ( तन्त्रालोके—४।६ )

४. एक एव ज्ञानात्मा मोक्षावाप्तावुपाय इति न उपायनानात्वम् । अत एव तत्फलभूते मोक्षेऽपि न कश्चिद् भेदः । '''काल्पनिकेऽपि हेतुफलयोर्भेदे ज्ञानात्मा एक एव उपायोऽ-भ्युपगत इति उपायनानात्वस्यैवाभावात् को नाम फलभूतेऽपि मोक्षे भेदः स्यात् । (तन्त्रालोकविवेके—१।१६५)

भासत इति स केनचिदप्युपायेनोपेयो नास्ति । अज्ञातज्ञापको अप्राप्तप्राप्तिकारी वा भवत्युपायः । अत एवोक्तम्—

उपायजालं न शिवं प्रकाशयेद्
घटेन किं भाति सहस्रदीधितिः ।
विवेचयन्नित्थमुदारदर्शनः
स्वयंप्रकाशं शिवमाविशेत् क्षणात्[1] ॥ ( तन्त्रसारे—२।६ )

वस्तुतस्तु बन्धो मोक्षो वापि न नाम कश्चिदस्ति, बन्धनस्य तात्त्विकत्वे मोक्षाभावप्रसङ्गात् । अमुमेवाभिप्रायं गर्भीकृत्य बन्धमोक्षव्यवस्थां तात्त्विकीं नानुमन्यन्ते दार्शनिकाः । तदुक्तम्—

संसारोऽस्ति न तत्त्वतस्तनुभृतां बन्धस्य वार्तैव का
बन्धो यस्य न जातु तस्य वितथा मुक्तस्य मुक्तिक्रिया ।
मिथ्यामोहकृदेष रज्जुभुजगच्छायापिशाचभ्रमो
मा किञ्चित् त्यज मा गृहाण विरम स्वस्थो यथावस्थितः ॥
( तन्त्रालोकविवेके—१।३३१ उद्धृतम् )

स्वात्मप्रत्यभिज्ञानार्थं कथं तर्हि केषाञ्चन प्रवृत्तिरिति चेत्, शिवस्य प्रसादः शक्तिपात एव वा तत्र हेतुरिति त्रिकशासनविदः । तेनैव भक्तेरुदयः[2] , सद्गुरुप्राप्तिः[3], दीक्षाग्रहणम्, साधनासु प्रवेशः सिद्धिश्च[4] । अयमेव शक्तिपातः आत्मवर्तिनं विवेकमुद्दीपयति[5] । सोऽयमनुग्रहरूपप्रसादमूलोऽयं शक्तिपातः शिवस्वातन्त्र्यसारो न पुनः अन्यनिमित्तापेक्षः । शक्तेः सापेक्षत्वे अनीश्वरत्वं प्रसज्येत[6] । तत्त्वतश्च स्वात्मस्वातन्त्र्ये ज्ञानक्रियाशक्तीनामुदय एव शक्तिपातः । स्वात्मनः शिवाभिन्नत्वात्, शक्तेश्च तत्र समवायात् ।

---

१. उपायैर्न शिवो भाति भान्ति ते तत्प्रसादतः । ( तन्त्रालोकविवेके—२।२ इत्यत्रोद्धृतम् )
२. तस्यैव हि प्रसादेन भक्तिरुत्पद्यते नृणाम् । ( मालिनीविजयवार्तिके—१।६९७ )
३. (i) भुक्तिमुक्तिप्रसिद्ध्यर्थं नीयते सद्गुरुं प्रति । (मालिनीविजयोत्तरे)
(ii) असद्गुरुतस्तु सद्गुरुगमनं शक्तिपातादेव । (तन्त्रसारे, पृ० ११२२)
४. शक्तिपातोदये जन्तोर्येनोपायेन देशिकः ।
करोत्युद्धरणं तत्तन्निर्वाणाय प्रकल्पते ॥ (तन्त्रालोके—२५, २३)
५. स्वातन्त्र्यसारश्चासौ परमशिवः शक्तेः पातयिता इति निरपेक्ष एव शक्तिपातो यः स्वरूपप्रथाफलः । ( तन्त्रसारे, पृ० १२२ )
६. इत्थ पुराणशास्त्रादौ शक्तिः सा पारमेश्वरी ।
निरपेक्षैव कथिता सापेक्षत्वे ह्यनीशता ॥ (मालिनीविजयवार्तिके—१।६९८)

"दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्"[1] ।

"यमेवैष वृणुते तेन लभ्यः"[2] ।

इत्यादीनि शास्त्रान्तरवचनान्यपि शक्तिपातमेवाभिव्यञ्जयन्ति । शक्तिपातस्यैव स्फुटं चिह्नमव्यभिचारिणी अनिवारितवीर्या च भक्तिः, यया शिवत्वं व्यक्तिमेति[3] ।

परमेश्वरस्वरूपस्वात्मविषया न त्वन्यदेवताविषया शक्तिपातलक्षणा अनुध्या ( अनुसन्धानमेव ) भक्तिः ।

"न पादपतनं भक्तिर्व्यापिनः परमेशितुः ।
भक्तिर्भावस्वभावानां तदेकीभावभावनम् ॥"

( क्षेमेन्द्रेण गीतानिष्यन्दे उद्धृतम् )

एषैव एकीभावभावनया जायमाना मतिः शाङ्करी शक्तिरिति विज्ञान-भैरवे[4] आम्नाता । तस्या भावनयैव शिवो भवति । भक्तिकल्पपादपस्यैव च 'अणिमादिगुणावाप्तिः सदैश्वर्यं भवक्षयः पल्लवाः' सन्ति । येयं भक्तिस्त्रिकदर्शनानुसारं शिवस्यैव शिवोपास्तिरस्ति । शैवी चेयं भावना प्रतिक्षणं प्रतितिष्ठति—

शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत् ।
शिवो यजति यज्ञश्च यः शिवः सोऽहमेव हि ॥

एतद्भावनाभरितान्तःकरणो भैरवीभावपूर्णः समत्वधिया[5] सततं लोकानु-ग्रहपरायणस्तिष्ठति । लोककर्तव्यं लोकानुग्रह एव परमशिवसमावेशस्यानुत्तरस्य फलम् । तथा चोक्तम्—

---

१. भगवद्गीतायाम्—११।८ ।

२. कठोपनिषद्—२।२३, मुण्डकोनिपषद्—३।२।३ ।

३. निपाताद्यस्फुटं चिह्नं भक्तिरव्यभिचारिणी ।
तया शिष्यस्य सततमनिवारितवीर्यया ॥
पुंसः प्रसन्नभावस्य शिवत्वं व्यक्तिमेति हि ।
( तन्त्रालोकविवेके—२७, २८ उद्धृतं मतङ्गतन्त्रम् )

४. भक्त्युद्रेकाद्विरक्तस्य यादृशी जायते मतिः ।
सा शक्तिः शाङ्करी नित्यं भावयेत्तां ततः शिवः ॥ (विज्ञानभैरवे, १२१)

५. (i) तस्मात्समत्वं मूलन्तु व्रतानां परमं व्रतम् । (तन्त्रालोकविवेके, १२।१२)
(ii) स्वपरस्थेषु भूतेषु जगत्यस्मिन्समानधीः । (नेत्रतन्त्रे—८।१८)

समस्तयन्त्रणातन्त्रत्रोटनाटङ्कधर्मिणः ।
नानुग्रहात्परं किञ्चिच्छेषवृत्तौ प्रयोजनम्[1] ॥ (तन्त्रालोके—२।३८)

संविदद्वैतशालिनो जीवन्मुक्तस्य योगिनः स्नानशुद्ध्यर्चनाहोमध्यानजपपूजादिकं बाह्यं किमपि कर्म कर्तव्यं न भवति ।

"एवं स्वदेहं बोधैकपात्रं गलितभेदकम् ।
पश्यन्संवित्तिमात्रत्वे स्वतन्त्रे तिष्ठति प्रभुः" ॥
( तन्त्रालोके—४।११९-१२० )

गुरुतः शास्त्रतः स्वतो वा बाह्यान्तरचर्याप्राणायामादिक्लेशप्रयासकलाविरहात्सुघटमनुत्तरं त्रिकदर्शनं परिभाव्य अपरिमितेच्छाज्ञानक्रियाशक्तीनामभिव्यक्त्या आत्मनो विश्वकर्तृत्वलक्षणमैश्वर्यं स्वातन्त्र्यं चानुभवति सर्वोऽपि—

सर्वो ममायं विभव इत्येव परिजानतः ।
विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता ॥
( ईश्वरप्रत्यभिज्ञाकारिकायाम्—४।१।१२ )

परमाद्वैतसंविद्रूपात् परमशिवादन्यत्सर्वं पारतन्त्र्यात्पाश एव ।

यत् किञ्चित्परमाद्वैतसंवित्स्वातन्त्र्यसुन्दरात् ।
पराच्छिवादुक्तरूपादन्यत्तत्पाश उच्यते ॥ (तन्त्रालोके—१।१४)

इच्छाज्ञानक्रियाशक्तिमन्तः सर्वेऽपि जीवास्तत्त्वतः स्वतन्त्राः परमेश्वररूपा एव ।

इच्छाज्ञानक्रियापूर्वा यस्मात् सर्वाः प्रवृत्तयः ।
सर्वेऽपि जन्तवस्तस्मादीश्वरा इति निश्चितम् ॥
( मानसोल्लासे—२।४४ )

इदमेवानुत्तरं त्रिकदर्शनम् । अत एवाहुरभियुक्ताः—

सन्ति पद्धतयश्चित्राः स्रोतभेदेषु भूयसा ।
अनुत्तरषडर्धार्थक्रमे त्वेकापि नेक्ष्यते ॥ (तन्त्रालोके—१।२४)

---

१. तन्त्रालोकविवेके (२।३८) उद्धृतमन्यदपि पद्यममुमेवार्थं पुष्णाति—
स्वं कर्तव्यं किमपि कलयंल्लोक एष प्रयत्नान्
नो पारार्थ्यं प्रति घटयते काञ्चन स्वात्मवृत्तिम् ।
यस्तु ध्वस्ताखिलभवमलो भैरवीभावपूर्णः
कृत्यं तस्य स्फुटमिदमियल्लोककर्तव्यमात्रम् ॥ (तन्त्रालोकविवेके—२।३८)

एतद्दर्शनभावितान्तःकरणेन कविकुलगुरुणा कालिदासेन कुमारसम्भवे शक्तिरूपया उमया ( मालिनीक्रमेण उ, म्, अ इति प्रणवरूपया ) ब्रह्मचारिवेषावृतस्य शिवस्य प्रत्यभिज्ञानं निबद्धम् ।

इतो गमिष्याम्यथवेति वादिनी चचाल बाला स्तनभिन्नवल्कला ।
स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥

प्रतिश्रुतं च—अद्य प्रभृत्यवनताङ्गि तवास्मि दासः क्रीतस्तपोभिरिति ( कुमारसम्भवे ५ सर्गे ) ।

"चन्द्रचन्द्रिकयोर्यद्वद्यथा वागर्थयोरिव" ।
"अर्थं शम्भुः शिवा वाणी तस्मै तस्यै नमो नमः" ॥

इत्यादिकं शक्ति-शक्तिमद्रूपं विभावयता च रघुकारेण तयोः वागर्थयोरिव सम्पृक्तिर्वन्दिता । अभिज्ञानशाकुन्तले च शुद्धशीलायाः शक्तिरूपायाः शकुन्तलाया मोहापगमे[1] दुष्यन्तेन[2] मारीचाश्रमे प्रत्यभिज्ञानं रूपितम्[3] । काव्ये एकत्र शिवस्यापरत्र नाट्यशक्तेः साक्षात्कारः । महाकविकाव्यालोचनं प्रत्यभिज्ञानमन्तरा न सम्यग्भवतीति ध्वनिकृतस्तत्र प्रमाणम् । यदाहुः—

"सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन ।
यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः" ॥ (ध्वन्यालोके—१।८)

अभिनवगुप्तस्य काव्ये नाट्ये च सर्वैः काव्यशास्त्रपरमाचार्यैः स्वीकृतो रससिद्धान्तः प्रत्यभिज्ञापरपर्यायं त्रिकदर्शनमेवाश्रयते । यथोक्तं तेन स्वयमेव—

---

१. (i) सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः सम्मोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ (अभिज्ञानशाकुन्तले—७।२४)

( i) मोहान्मया सुतनु पूर्वमुपेक्षितस्ते । (तत्रैव—७।२५)

(ii) छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥ (तत्रैव—७।३२)

२. नान्दीमुखेन तस्य अष्टमूर्तिशिवरूपत्वं ध्वनितम् ।

३. उभयत्रापि स्वातन्त्र्यकर्तृत्वरूपं प्रभुत्वं च शक्तेरेवेत्यपि ध्वनितम् । तथा हि "अद्य प्रभृत्यवनताङ्गि तवास्मि दासः" इति कुमारसम्भवस्य पञ्चमसर्गे, "भर्तर्यपेततमसि प्रभुता तवैव" इति शाकुन्तलस्य सप्तमाङ्के ।

"निर्विघ्नास्वादरूपा च रसना। तद्गोचरीकार्याः चित्तवृत्तयो रसा न वेति। अयमर्थः अभिनवभारत्यां नाट्यवेदविवृतौ वितत्य व्युत्पादितोऽस्माभिरिति तत्कुतूहली तामेवावलोकयेदिह तु प्रकृतविघ्नकारित्वान्न विवृतः। तस्मादुपचरितस्य स्वसंवेदनरूपतानान्तरीयत्वेनावस्थितस्य स्वतन्त्रस्यैव रसनैकघनतया परामर्शः परमानन्दा निर्वृत्तिश्चमत्कार उच्यते"।

ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्याम्, भा. २, पृ० १०८-१०९)

इदञ्चास्य विश्वकल्याणार्थं प्रवृत्तस्य त्रिकदर्शनस्य भरतवाक्यम्—

शुभमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः।
दोषाः प्रयान्तु नाशं सर्वत्र सुखीभवन्तु लोकाः॥

( विवृतिविमर्शिन्याः प्राचीनपाण्डुलिपौ )

# काशीखण्डपर्यालोचनम्*

## ( षड्विंशाध्यायतः पञ्चाशदध्यायात्मकम् )

आचार्यश्रीकरुणापतित्रिपाठी
कुलपतिचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
अध्यक्षचरश्च,
उत्तरप्रदेश-संस्कृताकादम्याः

❃ ❃ ❃

[ अविमुक्तक्षेत्रोत्पत्तिवर्णनपुरस्सरं वाराणस्या विविधनाम्नामानन्दकानन-महाश्मशानाद्यभिधानानां मूलमथ च काशीविवरणचक्र–पुष्करिणीतीर्थ–पञ्चक्रोशात्मक-ज्योतिर्लिङ्गादिसहितमणिकर्णिकामाहात्म्यादिरूपम् । ]

### षड्विंशाध्यायपर्यालोचनम्—

देववरेण्यं गौरीसुतं प्रति परिप्रश्नं समुपस्थापयन् मुनिवरोऽगस्त्योऽब्रवीत्—अस्य क्षेत्रस्य यानि विविधान्यभिधानानि वाराणसी–काशी–रुद्रावास–महाश्मशाना-नन्दकाननादीनि कैर्हेतुभिस्तानि जातानि ? सर्वतः प्रथमं मुनिर्जिज्ञासितवान् यत्कदार-भ्यास्य पुण्यक्षेत्रस्य भुवस्तले अविमुक्तक्षेत्रमिति परम्पराप्रथितिर्जाता ? कथं च मोक्ष-दमिदं क्षेत्रं जातमथ च कथं वा त्रैलोक्यवन्दनीया पुण्यस्थली मणिकर्णिकेत्याख्यायते ? अन्यानि पूर्वोक्तानि आनन्दकाननादीन्यभिधेयानि कथं चेदं क्षेत्रमवाप्तानि ?

### अविमुक्तक्षेत्रम्—

स्कन्देन विज्ञाप्यते स्म यन्महाप्रलयकाले यदा स्थावर-जङ्गम-सूर्य-चन्द्र-तारागणादिभिर्विश्वं शून्यं जातम्, यदा च वह्नि-वायुप्रभृतिरहितमभूत्, दिग्विभाग-कालगणनाहीनं च बभूव, द्रष्टृ-श्रोतृ-वक्त्रादयोऽपि लुप्ता अभवन्, यदा सूचीभेद-नावकाशविरहितं विश्वमवकाशहीनमवतिष्ठते स्म, तदा केवलं निर्गुणं निर्विकल्पं कूटस्थं ब्रह्म एव ज्ञानेन्द्रियवाङ्मनोभिरगोचरं निरारम्भं निर्मायं निरुपद्रवं सत्यं ज्ञानमनन्तमित्यादि श्रुतिभिर्गीतमासीत् । तस्यैव संज्ञाविहीनस्य ब्रह्मणः सर्वाः संज्ञाः विकल्प्यमानाः संजायन्ते। तेनामूर्तेन स्वलीलया स्वमूर्तिरकल्पि। सा किल मूर्तिः सकलैश्वर्यमयी, सर्वगुणोपेता, सर्वज्ञानमयी, शुभा, सर्वगा, सर्वरूपा, सर्वदर्शिनी, सर्वकर्त्री, सर्ववन्दनीयाऽऽसीत् । सा मूर्त्तिः किल साक्षाच्छिव एव ।

* पर्यालोचनमिदं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयद्वारा प्रकाशितस्य द्वितीयभागात्मकस्य काशीखण्डस्य षड्विंशाध्यायादारभ्य पञ्चाशदध्यायपर्यन्तं जातम् । एतेष्वध्यायेषु काशीखण्डस्योत्कर्षभूतानि सर्वाणि तत्त्वानि समाख्यातानि सन्ति ।

मन्ये, तस्य निर्गुणस्य निर्विकल्पस्य सत्यज्ञानानन्दमयस्य ब्रह्मणः सर्वगुणादि-सकलविभूतिप्रदा सर्वैश्वर्यशालिनी मूर्तिरेव शिव इति गीयते। स एवेश्वर ईशानश्च। स्वैरं विहरता शङ्करेणेश्वरेण स्वकलेवरात्प्रधानम्, प्रकृतिः, शिवा, गुणवती, परा, माया, बुद्धितत्त्वं च स्वदेहानपायिनी चैताः सर्वाः सृज्यन्ते स्म। युगपदेवोमया साकं शिव आद्यपुरुषः क्षेत्रमविमुक्तं वाराणस्यपरपर्यायं विनिर्ममे। सा शक्तिरेव प्रकृतिरित्युच्यते, स एवेश्वरः पुरुषः प्रोच्यते। शिवचरणतलविनिर्मितं क्षेत्रं पञ्चक्रोश-प्रमाणम्। ताभ्यां परमानन्दरूपाभ्यामुमामहेश्वराभ्यां च रममाणाभ्यां तत्क्षेत्रं ज्योतिर्मयमभवत्। तद्यथा—

"मुने! प्रलयकालेऽपि न तत्क्षेत्रं कदाचन।
विमुक्तं हि शिवाभ्यामविमुक्तं ततो विदुः"॥ इति॥

यदा भूवलयं नासीत्, सागरोऽपि नासीत्तदा विहर्त्तुमीशानेन क्षेत्रमेतन्निर्मितम्। तत आरभ्य शिवयोः पर्यङ्कभूतं क्षेत्र 'अविमुक्तक्षेत्रम्' इत्याख्यायते[1]।

**आनन्दकाननम्—**

पुराकल्पे आनन्दप्रदायकत्वादस्य क्षेत्रस्य आनन्दवनमानन्दकाननमिति नामाकारि। तत्पश्चादेवाविमुक्तक्षेत्रमित्यपरा संज्ञा जाता। अत्र कारणं तु यतोऽस्मिन्नानन्दकानने यत्र तत्र स्थितानि सर्वाण्यपि शिवलिङ्गानि नूनमानन्दकन्दबीजानामङ्कुराण्येव सन्ति।

**मणिकर्णिका—**

अस्य क्षेत्रस्थस्य विशिष्टस्थानस्य मणिकर्णिकेति समाख्या कथमभवदित्यपि विशेषरूपेण ज्ञेयम्।

पुराकाले तस्मिन्नेवानन्दवने रममाणावुमामहेश्वरौ विचारयाञ्चक्रतुरपरस्य कस्यचिदन्यस्य सृष्टिम्। उमामहेश्वरौ तौ विचारितवन्तौ यत्-सृष्टि-स्थिति-संहाराणां समस्तं भारं तस्मै समर्पयावहे, स्वच्छन्दरूपेण केवलं काश्यां निवसनाय। अथ च काश्यां मृतानां मोक्षप्रदानं कुर्याव। इत्थं च चिन्तयन् शङ्करो जगद्धात्र्या वामेऽङ्गभागे दृष्टिं व्यापारयामास। ततश्चैकः सर्वोत्तमः पुरुषोत्तमः प्रादुरभूत्। महादेववचनात् स महाविष्णुर्बभूव। "सर्वे वेदास्तव निश्वसिताः प्रदीव्यन्ति। तेन वेदानुशासितमार्गेण सकलसर्गादीनां व्यवस्थापनञ्च त्वयैव विधातव्यमिति तं निर्दिदेश"। तत्पश्चाच्चानन्द-काननं स्वयमपि विवेश।

---

१. त्रिकाभिधेये शैवाद्वैतदर्शने सकलकलासम्पन्नस्य ज्ञान-क्रियेच्छारूपशक्तित्रयविशिष्टस्य सर्वरूपत्वं सर्वकर्तृत्वं परमज्ञानमयत्वं विद्वद्भिः परिचेयम्।

महाविष्णुश्च तपसि मनश्चकार। ततश्च महाविष्णोः घोरतपश्चरणेन परमतुष्टो धूर्जटिस्तस्मै बहून् वरान् ददौ। तेषु चान्यतमेन वरेण[1] पूर्वचक्रपुष्करिणीतीर्थस्य मणिकर्णिकेत्याख्या विख्यायते स्म। अपि च द्वावपि मुक्तिक्षेत्रे बभूवतुः।

मणिकर्णिकेश्वराख्यं लिङ्गमपि तत्रैव स्थापितमभूत्। काशीत्यपि ज्योतिर्मयप्रकाशनस्वरूपा नगर्या अस्याः काश्यत इति 'काशी' इत्यपि समाख्या ख्याता भविष्यति[2]। सर्वेषां जीवानां चात्र मुक्तिर्भविष्यति[3]।

इत्थं च विष्णु-शिव-संवादमिषेण अस्य तीर्थस्यास्याश्च मोक्षदायिकायाः पुर्या आनन्दकाननस्य च माहात्म्यं पुराणकारो गीतवान्। काशीक्षेत्रस्य ज्योतिःस्वरूपस्यापि विस्तरेण माहात्म्यं निगदितमिति हेतुरस्याध्यायस्य महनीयत्वे। नानाधर्माचरणेन, व्रतानुष्ठानेन तपस्यया व्रतादिभिर्यत् पुण्यमर्ज्यते, तत्सर्वं सश्रद्धेन काशीदर्शनेनानायासेन सुलभं भवति।

तदनन्तरं च परमात्मानं पुरुषोत्तमं श्रीविष्णुं यथायथं सृष्टि-स्थिति-संहारव्यवस्थापनायाधिकरोति स्म भगवान् महादेवः। एतस्मिन्नेव प्रसङ्गे परमेश्वरेण ईशानेनास्याविमुक्तक्षेत्रस्य मुक्तिप्रदत्वमपि संसूचितम्। परमपापिनां विषयेऽप्येतद्विज्ञापितं यदस्मिन् पञ्चक्रोशात्मके काशीक्षेत्रे प्रवेशमात्रेण सर्वाणि पापानि दूरीभवन्ति। अत्र च श्राद्धपूजन-यात्रा-यज्ञ-व्रतादीनामनुष्ठानस्याऽप्युपरि महत्वं वर्णितं वर्तते। क्षेत्रमहिमानभिज्ञोऽपि च तदेव फलं लभते, यानि फलानि क्षेत्रमाहात्म्यविज्ञा लभन्ते।

---

१. त्वदीयस्यास्य तपसो महोपचयदर्शनात्।
यन्मयान्दोलितो मौलिरहिश्रवणभूषणः॥
तदान्दोलनतः कर्णात्पपात मणिकर्णिका।
मणिभिः खचिता रम्या ततोऽस्तु मणिकर्णिका॥
चक्रपुष्करिणीतीर्थं पुराख्यातमिदं शुभम्।
त्वया चक्रेण खननाच्छङ्खचक्रगदाधर॥
मम कर्णात्पपातेयं यदा च मणिकर्णिका।
मणिभिः खचिता रम्या ततोऽस्तु मणिकर्णिका॥ (काशीखण्डे—२६।६०-६४)।

२. काशतेऽत्र यतो ज्योतिस्तदनाख्येयमीश्वरः।
अतो नामाऽपरं चास्तु काशीति प्रथितं विभो॥ (तत्रैव—२६।६७)

३. आब्रह्मस्तम्बपर्यन्तं यत्किञ्चिज्जनुसंज्ञितम्।
चतुर्षु भूतग्रामेषु काश्यां तन्मुक्तिमाप्यतु॥ (तत्रैव—२६।६९)

काशीमप्राप्य न कोऽपि सुखी भवति । प्रकृतिजन्यैः चतुर्विंशपाशैः पापविमुक्तिर्न काशीं विना सम्भवा। अत्र काश्यां पापकर्त्तारो मरणानन्तरं रुद्रपिशाचा भवन्ति। तदनन्तरं मुक्ता भवन्ति वाराणसीपुरपतिप्रसादात् । यतः काश्यां लिङ्गरूपेण निवसन् परमेश्वरः स्थिररूपेण निवसति, स एव परमश्रेयस आस्पदम् । पञ्चक्रोशात्मकं काशीरूपात्मकं यज्ज्योतिर्लिङ्गम्, तदेकमेवापि सकलमुक्तिपुरीव्यापकम् । अतः काशीवासः किं वा काशीदर्शनमात्रमेव परमानन्दस्य, परमसुखस्य जनकम् ।

गर्भधारणपीडां स्मारं स्मारं जरा-मृत्युकष्टं दर्शं दर्शं यमदूतानां यातनादण्डप्रहारं श्रावं श्रावं नरेणावश्यमेव काश्या आश्रयणं विधेयमिति निष्कर्षः ।

इदमत्र विशेषरूपेणावधेयं यत्पञ्चक्रोशात्मकस्य ज्योतिर्लिङ्गात्मकस्य वाराणसीनगरस्याविमुक्तक्षेत्रनामादीनां विवरणं मत्स्यपुराणे, ब्रह्मवैवर्त्तपुराणान्तर्गतकाशीरहस्ये पद्मपुराणस्य च काशीमाहात्म्ये संक्षेपेण चान्येषु पुराणेषु विवृतमस्तीति हेतोर्विशेषविवरणं तत्र तत्रावलोकनीयम् । संक्षेपेणात्र प्रमुखपुराणेषु मोक्षदायिकाया अस्याः पुर्या महत्त्वं पुरोवर्णनीयमिति । **षड्विंशाध्यायस्य** चूर्णिकायां मणिकर्णिकाख्यानमिति निगदितम् ।

## सप्तविंशाध्यायपर्यालोचनम्—

वक्ता स्कन्दो वर्णयति यथास्याः पुण्यनगर्या वाराणसीत्याख्या जाता । तच्च विष्णुं प्रति महादेवो निजगाद—"महामुनिकपिलब्रह्मशापदग्धानां निजपूर्वपुरुषाणामुद्धाराय न्यस्तराज्यभारो महाराजो भगीरथो गङ्गां पृथिवीमानेतुं हिमालयं गत्वा तपश्चकार। यतो गङ्गां विना ब्रह्मशापदग्धानां सगरपुत्राणामुद्धारं कर्त्तुं नान्यो देवो नान्या वा नद्यादयः समर्थाः । यतो हि गङ्गा भगवतो महादेवस्यापरा सलिलात्मिका, ब्रह्माण्डानामाधारस्वरूपा, पराप्रकृतिमयी, शुद्धविद्यास्वरूपिणी, करुणात्मिका, आनन्दामृतरूपा, शुद्धधर्मरूपिणी मूर्तिः । अथ सैव च जगतां धात्री । स्वयं शङ्करेणात्र प्रसङ्गे प्रोक्तं यदिमां जगद्धात्रीं परब्रह्मरूपिणीं जगतो रक्षायै शिवो धारयति । सर्वं तीर्थं सर्वाणि पुण्यधामानि, सर्वे देवाः, सकलानि पुण्यानुष्ठानानि, पुरुषार्थाः सर्वे सर्वाश्च शक्तयोऽस्यां शाश्वतरूपेण तिष्ठन्ति, सर्वाणि पावनकर्माचरणफलानि वसन्त्यस्याम् । किं बहुना, न किमपि पुण्याचरणं यदस्याः सेवनेन दुर्लभम् । काशीखण्डे यथा—

**"लिङ्गे सम्पूजिते सर्वमर्चितं स्याद्यथा जगत् ।**
**गङ्गास्नानेन लभते सर्वतीर्थफलं तथा"** ॥ (२७।४०)

अनिच्छयाऽपि गङ्गास्नानमात्रेण समग्राणि पापानि तथैव दह्यन्ते, यथाग्निसंस्पर्शनात्तूलपर्वतो दग्धो भवति। कलौ च गङ्गाया गङ्गास्नानस्य च सर्वोत्कृष्टं

माहात्म्यं फलं च। अतो नरेण गङ्गास्नानं सप्रयासं सोत्कण्ठं सभक्तिभावभरितं विधेयम्, यतो हि कलिकल्मषपुञ्जं भयत्रस्तं सद् गङ्गाम्भसि विलीनं भवति। यथा सूर्योदयेन तमांसि विनश्यन्ति, यथा चेन्द्रवज्रपातभयान्नगाः पलायन्ते स्म, गरुडनामग्रहणमात्रेण यथा नागा विलीयन्ते, यथा च महावातभयभीता मेघा अम्बरे विकीर्यन्ते, तत्त्वज्ञानेन यथा मोहान्धकारो नश्यति, दिव्यौषधैर्यथा रोगमुक्तिर्जायते, तथैव गाङ्गजलस्पर्शमात्रेण सर्वे दोषाः प्रणश्यन्ति। **"अतः कलौ संसेव्या कलौ गङ्गेष्टसिद्धिदा"।**

गङ्गास्नानाय नक्षत्र–मुहूर्त्त–शुभतिथि–शुभलग्न–प्रभृतिविचारणामकृत्वैव स्नानरूपं कलिकल्मषघ्नमनुष्ठानं विधेयम्। गङ्गोदके श्राद्धसम्पादितपिण्डदानेन, सविधितिलतर्पणानुष्ठानेन गोदानेनान्न-भक्ष्य-पेयादीनां वितरणेन धनदानेन सत्पात्रं प्रत्यक्षयं पुण्यं लभते नरः। पितरो लालसां कुर्वन्ति—"यन्मम वंशोद्भवाः कदा मां गाङ्गेऽम्भसि श्राद्धतर्पणादिकं विधाय सन्तर्पयिष्यन्ति" इति।

इत्थमेवामुष्मिन्नेवाध्याये दिनैकमासैकवर्षं यावज्जीवनं विधिवद्गङ्गास्नानशीलैर्नरश्रेष्ठैर्यत्पुण्यफलमर्ज्यते, तत्सर्वमपि वर्ण्यते। वाप्याराम-तडाग-वृक्षराजि-भोजनशाला-पानीयशालादिनिर्माणेन ये पुण्यलोका अर्जिता भवन्ति, ते सर्वे सकृदेव देवधुनीजलसंस्पर्शमात्रेण ततोऽधिकाश्च फलसमूहा नरैर्लभ्यन्ते। किं बहुना, कन्यादानादभ्यधिकतरो शुभफलदायको भागीरथीजलस्पर्शो भवतीति विज्ञेयम्। देवनद्या जलस्नायिना गोलोके शिवलोके वा शाश्वतनिवासो दुर्लभोऽवाप्यते।

इत्थमेव गङ्गास्नानस्य, गङ्गास्नानार्थसमुद्यतस्य, देवधुनी-जलस्प्रष्टुः, गङ्गास्नानादिकर्मणां महत्त्वं पुण्यं मङ्गलफलदातृत्वादिकं च काशीखण्डकारेणेहाध्याये भाषितम्।

गङ्गाभजनशीलस्य गङ्गातटनिवासिनो पुण्यभाजो दानादिकर्मणाऽमरधुनीपुलिनपरिसरस्थस्य एकाहनिवासिनो जनस्य सौभाग्यं वर्णनातीतम्। स खलु विपुलान् भोगान् भुञ्जानः पुत्रपौत्रसमन्वितः स्वर्गीयाः सर्वाः सुखकामना आस्वाद्य पुनरन्यजन्मनि पूर्वजन्मवासनावशात् काश्यामुत्तरवाहिनीं गङ्गां समासाद्य विश्वेश्वरं च समाराध्य यथासमये देहान्ते जाते ब्रह्म एव सम्पद्यत इत्येवावगन्तव्यम्। इत्थं च सुवर्णदानादिप्रभावेणैकराड् जम्बूद्वीपस्य भूत्वा जन्मजरामृत्युभयविरहितो जन उत्तरवाहिनीगङ्गातटे पञ्चक्रोशात्मके ज्योतिर्लिङ्गस्वरूपे वाराणसीनगरे शरीरं त्यजन्, साक्षाच्छिवेन परमज्ञानस्वरूपतारकमन्त्रोपदेशतः शाश्वतिकं निर्वाणमवाप्नोति।

इतः षट्त्रिंशदुत्तरशतश्लोकत आरभ्यास्मिन्नेवाध्याये गङ्गादशहरामाहात्म्यम्, गङ्गादशहरापुण्यपर्वण्यनुष्ठेयानां सविधि विधानम्, दशहरापर्वणि कृतकृत्यानां फलवर्णनादिकं च निरूपितं वर्तते। तच्च दशहरापर्व भवति—ज्येष्ठमासे सिते दले हस्तनक्षत्रयुतायां दशम्यां तिथौ। तच्च यदि बुधवारेण संयुतं स्यात्, तदाऽमोघानन्तफलदायि। एष योगो दशविधानां कायिक–वाचिक–मानसिक–पातकानां गङ्गास्नानमात्रेण समग्रत उन्मूलकः। अत्र दशविधानां पापानामपि निर्देशो विद्यते। अमुष्मिन्नेव प्रसङ्गे गौर्यभिन्नाया गङ्गाया स्तवनक्रमेण दशहरास्तोत्रमप्युक्तम्, यस्य च दशकृत्वो गङ्गाजले स्थितो नरः पाठं कृत्वा गङ्गापूजनं च सम्यक् सम्पाद्याक्षयं पुण्यफलं भजते।

यद्यपि हरिद्वारक्षेत्रे गङ्गादशहरापर्वणि विशिष्टं स्नानं प्रतिवर्षं भवति, तथापि काश्यामपि दशाश्वमेधाख्ये घट्टतीर्थे प्रातश्चतुर्वादनादारभ्य दिनपर्यन्तं स्नान-दान-पूजनादीनां क्रमः प्रचलति। प्रातःकाले च कुमारिपूजकाः सर्वजातीया 'गुड़िया'-प्रवाहस्यायोजनं विदधति। कतिवर्षेभ्यः पूर्वं च काश्यां दशहरागङ्गोत्सव आयोज्यते, यत्र जलकन्दुकक्रीडातरणप्रतियोगिता–नौकाचालनप्रतियोगितादिविविधानां समायोजनानां विधानं भवति। संध्यायामद्यापि गङ्गापूजनं दीपदानादिकं प्रचलति।

### अष्टाविंशाध्यायपर्यालोचनम्—

अस्मिन्नध्यायस्योपक्रमावसरे विशालाक्ष्याः पार्वत्या एकस्य प्रश्नस्य (तदा भागीरथो राजा क्व ? क्व भागीरथी तदा ?) उत्तरं प्रयच्छन् भगवाँच्छङ्करोऽब्रवीद्यदत्र विषये सन्देहो नैव कदाचिदपि कार्यः। यतो हि—

श्रुतिस्मृतिपुराणेषु कालत्रयमुदीर्यते ।
भूतं भावि भवच्चापि संशयं मा वृथा कृथाः ॥

पुनश्च शिवोक्तः स्कन्दो गङ्गातीरे कृतानां श्राद्धतर्पणादीनां महत्त्वं वर्णयति। सर्वतः प्रथममत्र धर्मकार्यार्थं पितृकार्यार्थं वा न देवा न वा पितर आहूतव्याः, न वा विसर्जनीयाः। यतो हि सर्वे देवाः, सकलाः पितरः शाश्वतरूपेण गङ्गाजले निवासं प्रकुर्वन्ति।

पितृवंशे मातृवंशे मृतानां श्वसुर-श्यालकादीनां तर्पणेन, श्राद्धीयपिण्डदानेन घोरातिघोरपातकिनां तृप्तिर्भवति, सद्गतिश्च, स्वर्गादिलोकाश्च तैर्लभ्यन्ते। विधानविधिसहित-तर्पण-श्राद्धाद्यनुष्ठानेन तृप्ताः सन्तो विषमनरकस्थिताः पितरोऽपि घोरकष्टवन्नरकवासाद्विमुक्ताः सन्तः सद्गतिमवाप्नुवन्ति। एतस्मिन्नेव प्रसङ्गे बहुविधमृतानां पापकर्तॄणामनेकप्रकाराणां बहुभिः श्लोकैरुल्लेखो विद्यते। इदमपि निर्दिष्टं यज्जाह्नवीतोये विधिना सकृदपि तर्पिता उपर्युक्तपापभाजः पितरस्तृप्ताः सन्तः सद्गतिं लभन्ते। अत्र च तर्पणे सतिलजल-पिण्डदानावसरे पठनीयो मन्त्रः—

"कामप्रदानि तीर्थानि त्रैलोक्ये यानि कानिचित् ।
तानि सर्वाणि सेवन्ते काश्यामुत्तरवाहिनीम् ॥
स्वः सिन्धुः सर्वतः पुण्या ब्रह्महत्यापहारिणी ।
काश्यां विशेषतो विष्णो ! यत्र चोत्तरवाहिनी ॥
गायन्ति गाथामेतां वै देवर्षि-पितृ-नरोगणाः ।
अपि दृग्गोचरा नः स्यात्काश्यामुत्तरवाहिनी ॥
यत्रामृतरसं तृप्ता रक्ता यत्र विवर्जिताः ।
पिबन्ति जाह्नवीतोयं विश्वनाथप्रसादतः" ॥ इति ।

इत्थं च काश्यां तर्पण-श्राद्धपिण्डदानादीनामनन्तपुण्यशालित्वं निगदितम् । पितरः कामयन्ते यदुत्तरवाहिनी काशीस्था गङ्गा अस्मान् दृग्गोचरा भवेत् । यतो हि विश्वेश्वराधिष्ठानत्वेनाविमुक्तक्षेत्रस्य माहात्म्यं कलौ युगे यद्यपि गोपितं वर्तते, तथापि तत्तुल्यमन्यत्किमपि न मुक्तिप्रदायि । इत्थं च काशीस्थदेवनद्या माहात्म्यं वर्णयताऽविमुक्तेश्वरेण गदितं यदत्र ज्ञानादज्ञानाद्वा नरस्य सत्कर्मकर्त्तुर्दुरात्मनो वा कीकसं गङ्गाम्भस्यत्र पतति यदा, तदा तस्य परमा गतिर्भवति ।

**वाहीकाख्यानम्—**

अस्मिन् वाराणस्या गङ्गामाहात्म्यप्रसङ्गे गङ्गामहिम्नो महत्त्वे महेश्वरः काशीश्वरो भगवन्तं विष्णुमेकमाख्यानमश्रावयत्—'पुण्यकलिङ्गे देशमध्ये कश्चिद्वाहीकः केवलयज्ञोपवीतधारी ब्राह्मणो लवणविक्रयी, सर्वविधब्राह्मणाचरणीय-कर्मानुष्ठान-विहीनो नवां विधवां कोविन्दीं ( तन्तुवायपत्नीं ) परिणीतवान् । जाते च दुर्भिक्षसंकटे स वाहीको वृषलीपतिर्देशान्तरं प्रातिष्ठत् । प्राणरक्षणाय देशाद्देशान्तरं तेन जङ्गम्यते स्म । एवं क्रमे दण्डकारण्यं प्राप्ते तस्मिन् मांसजिघृक्षया सिंहेन व्यापादितः स द्विजः । गृद्ध्रश्चैकोऽपरेण मांसभक्षिणा गृद्ध्रेण आमिषगृध्नुना युद्धमकरोत् । तदा च तस्य लवण-विक्रयिणो वामपादकीकसं भूमौ पपात । दैवयोगाच्च तदस्थि गङ्गाजले न्यपतत् ।

सिंहव्यापादितो वृषलीपतिर्द्विजो यमकिङ्करैर्बहुधापीडितो धर्मराजसमक्षं प्रापितः । यमराजेन चित्रगुप्तो पृष्टस्तस्य वाहीकस्य षोडशसंस्कारविरहितत्वं निवेदयाम्बभूव । [ एतस्मिन्नेव प्रसङ्गे चित्रगुप्तकर्मलेखाकथनमिषेण गर्भाधानादारभ्य सर्वेषां संस्काराणामनुष्ठाने किं किं फलं संस्कृतो नरोऽवाप्नोतीति विषयः सुस्पष्टं सम्यङ्निरूपितः । ] तत्पश्चाच्च वृषलीभूतस्य ब्राह्मणस्य दुराचारान्, व्यभिचारान्, कदाचारानाचारादींश्च सम्यक् प्रस्तुवन् चित्रगुप्तेनाऽपराधानुरूपं दण्डविधानं च

विज्ञापयता रौरवादिषु नरकेषु[1] सदण्डं कल्प-कल्पवर्षनिवास उक्तः । तत्र स वाहीकः स्वाचरितदुराचरणफलभोगाय यमदूतैर्निक्षिप्तः ।

एतस्यैवाभ्यन्तरे गृद्ध्रमुखाद् गाङ्गे वारिणि तस्य वाहीकस्यास्थि निपतितम्, तं पापिनमतितीव्रनिरयवेदनां भुञ्जानं संयोगवशाच्च भागीरथ्यम्भसि पतितास्थिनिमित्तकं विनष्टसकलपातकं ज्ञात्वा तत्क्षणमेव देवैः प्रेषितं देवदूतैर्वलयितं सघण्टावादनं विमानमप्सरोभिः संसेव्यमानं समायातम् । स्वकीयादुपर्युक्तपुण्यप्रभावाद्धेतोः स वाहीकः स्वर्गलोकं देवदूतैर्नीतः ।

एतत्पश्चाच्चाध्यायेऽमुष्मिन् विविधानि गङ्गास्नान-गङ्गाजलतर्पण-गङ्गातटीय-दान-व्रतोपवासादीनां फलानि वर्णितानि, यानि खल्वन्यनानाप्रकारव्रतोपवास-तपश्चरणदान-हवन-यज्ञाद्यपेक्षया बहुगुणनफलदायकानि निरुक्तानि । अन्ये चाप्यनेके महिमानो गङ्गाया निर्दिष्टाः ।

अन्ते च त्रिलोकजीवतारकशक्तिसमृद्धत्वाद्देवधुन्यास्त्रिपथगेति समाख्येत्यपि सूचितम् ।

इदमपि विज्ञापितं यदेतद्गङ्गातीर्थं सर्वतीर्थेषु श्रेष्ठं गरिष्ठं वरिष्ठञ्च । स्वर्ग-भूलोक-पातालेषु यानि कोट्यधिकानि तीर्थानि विद्यन्ते, तानि सर्वाणि किलास्यां पुण्य-सलिलायां सर्वदाऽवतिष्ठन्ते । गङ्गामहीयस्त्वविषयेऽध्यायावसाने केचन महत्त्वपूर्णाः श्लोकाः—

"गङ्गैव सर्वतीर्थानि गङ्गैव च तपोवनम् ।
गङ्गैव सिद्धिक्षेत्रं हि नात्र कार्या विचारणा ॥
यत्र कामफला वृक्षा मही यत्र हिरण्मयी ।
जाह्नवीस्नायिनस्तत्र निवसन्ति घटोद्भव ॥
धेनुं भागीरथीतीरे सुशीलां च पयस्विनीम् ।
वासोरत्नैरलङ्कृत्य ब्राह्मणाय ददाति यः ॥
यावन्ति तस्य लोमानि मुने ! तत्सन्ततेरपि ।
तावद्वर्षसहस्राणि स स्वर्गसुखभुग्भवेत्" ॥

इत्यलं वाङ्मनसातीतेन जाह्नवीमाहात्म्यवर्णनेन ।

---

१. अत्र रौरवादीनां नरकभेदानां नामगणनाऽपि पुराणकारः सूचयति । तद्यथा—

रौरवेऽन्धतामिस्रे कुम्भीपाकेऽतिरौरवे ।
कालसूत्रे कृमिभुजि पूयशोणितकर्दमे ॥
असिपत्रभवने घोरे यन्त्रपीडे सुदंष्ट्रके ।
अधोमुखे पूतिगन्धे विष्ठागर्तेष्वभोजने ॥
सूचीभेद्येऽथ संदंशे लालापे क्षुरधारके ॥ (का० ख० २८।७५-७७) . . .

## एकोनत्रिंशाध्यायपर्यालोचनम्—

एकोनत्रिंशाध्यायस्योपक्रमः खलु प्रश्नेनैकेन प्रवर्त्तते—पूर्वाध्याये विज्ञापितं वर्तते यन्मानवजनिः किल विना गङ्गास्नानं यदि निरर्थिका तदा कश्चिदुपायोऽस्ति गङ्गास्नानफलतुल्यपुण्यफलप्राप्तेः ? अस्मिन्नेव प्रश्नस्योत्तरप्रसङ्गे विज्ञाप्यते यद्बहूनि तीर्थानि, अनुष्ठानानि दान-व्रत-मन्त्रपाठ-स्तवन-यागादीनि महत्पुण्यजनकानि सन्ति; किन्तु तान्यपि गङ्गास्नानफलतुल्यपुण्यशालीनि नैव सन्ति। गङ्गाया महिमानं सूचयितुं पर्याप्तमेतत्तथ्यं यत् साक्षाद्भगवान् शङ्करो गङ्गां स्वशिरसि धारयति।

गङ्गास्नानफलं ब्रह्मन् गङ्गायामेव लभ्यते।
यथा द्राक्षारसास्वादो द्राक्षायामेव लभ्यते।। (का०ख०२९।२०)

किन्त्वस्ति एक इहोपायो येनाविकलं सकलं गङ्गास्नानफलं लोको लब्धुं शक्नोति लभते च। स चोपायो महच्छ्रेयस्करो मनोहरो मनोरथकरः पुण्यफलदायकः। असौ नूनं देवधुनीप्रीतिकरो शिवसन्तोषजनको निःसंशयं गङ्गास्नानदेशीयपुण्यदायकः। स चोपायो भक्त्या, श्रद्धया, विश्वासेन, समाहितचेतसात्र श्रीगङ्गासहस्रनामस्तवपाठरूपः।

इत्थमुपक्रम्य पुराणकारः श्रीगङ्गासहस्रनामस्तोत्रं प्रस्तौति, तत्रादौ 'नमो गङ्गादेव्यै' इत्युच्चार्य 'ओङ्काररूपिणीत्यारभ्य' ( का० ख० २९।१७ ) 'क्षेमदा क्षालिताघौघा क्षुद्रविद्राविणी क्षमा' इति पर्यन्तं ( श्लो० १६८ ) गङ्गासहस्रनामानि परिगणितानि विद्यन्ते। एतेन सहस्रनामस्तवपाठेन गङ्गास्नानकल्पफलावाप्तिरवश्यमेव भवति—

स्नानकाले पठेद्यस्तु यत्र कुत्र जलाशये।
तत्र सन्निहिता नूनं गङ्गा त्रिपथगा मुने।। ( का० ख० २९।१७६ )

तदनन्तरं काशीखण्डे स्तोत्रपाठस्य विधिविधानानि समाहात्म्यानि सफलानि च संसूचितानि वर्तन्ते। एतदपि च निर्दिष्टं वर्तते यद् यः श्राद्धस्य सत्पात्रभोजनकाले स्तोत्रस्यास्य पाठं विदधाति, तस्य पितरो नूनं परां तृप्तिं भजन्ते, बहुकालपर्यन्तं च स्वर्गे तिष्ठन्ति।

केवलमेष एव सहस्रनामस्तवो गङ्गास्नानस्य प्रतिनिधिः।

एतत्स्तोत्रस्यापरमपि महद्वैशिष्ट्यं श्रीविष्णुसहस्रनामगणेशसहस्रनामप्रभृतिस्तोत्रेभ्यो वर्तते यद् वर्णमालाक्रमेणाकारादारभ्य 'क्ष'-वर्णपर्यन्तानां नाम्नां यथाक्रमेण पाठोऽत्रास्ति।

## त्रिंशाध्यायपर्यालोचनम्—

### सधनञ्जयाख्यानं काशीरहस्यम्

अस्मिन् त्रिंशेऽध्याये काश्या रहस्यं काश्यां मरणमात्रादेव मुक्तिप्राप्तिः सर्वेषामित्यस्य वर्णनं विद्यते। कथ्यतेऽत्र न केवलं द्विजातिभ्यः; अपि तु जातिविचारं विनैव मरणमात्रेण सकलनरेभ्यः काशीं मुक्तिं वितरति। किं बहुना, नराणामेव न हि नूनं प्राणिनां समग्राणामपि मरणमात्रेण मुक्तिप्रदेयं पुण्यपुरी अविमुक्तापरनामधेयाऽसि-वरणयोर्मध्यस्था वाराणसी।

अस्या नगर्या गङ्गासमागमात्प्रागेव मुक्तिदातृत्वं विख्यातमासीत्; परन्तु कपिलमुनिक्रोधजन्यशापाग्निना भस्मीभूतानां स्वपूर्वपुरुषाणामुद्धारायेक्ष्वाकुवंशसम्भवेन नरपतिना भगीरथेन यदा शिवशिरोमालाभूता गङ्गा भूतलेऽवतार्य काश्यामानीता, तदा-प्रभृति पुण्यपुर्या अस्या अनन्तगुणिता माहात्म्यसमृद्धिः संजाता।

ज्ञानं विना, योगानुष्ठानं विना, निदिध्यासनसमाहारसमाधिप्रभृतिं विना मरणकाले शिवोपदिष्टतारकमन्त्रप्रभावेणात्र मनुजा मुक्तिमुक्तामणिमनायासेन लभन्ते; परन्तु रहस्यमत्रेदमेकं यदत्र मनुष्यस्य मरणं विना पूर्वकृतसुकृतं नावाप्यते। तद्यथा काशीखण्डे—

"विना सांख्येन योगेन काश्यां संस्थो मृतो भवेत्।
कर्मनिर्मूलनवता विना ज्ञानेन कुम्भज॥
शशिमौलिप्रसादेन काशीसंस्थो मृतो भवेत्।
यत्नतोऽयत्नतो वापि कालात्त्यक्त्वा कलेवरम्॥
तारकस्योपदेशेन काशीसंस्थो मृतो भवेत्।
अनेकजन्मसंसिद्धैर्बद्धोऽपि प्राकृतैर्गुणैः॥
देहत्यागोऽत्र वै योगः काश्यां निर्वाणयोगकृत्।
प्राप्योत्तरवहां काश्यामतिदुष्कृतवानपि" ॥

( का० ख० ३०।१२–१६ )

काश्यां मरणादेव तारकमन्त्रोपदेशप्रभावान्मुक्तिरिति संक्षिप्त आशयः।

यमेन्द्रादिदेवैः सर्वं विचार्य एकतो दक्षिणदिग्भागे दुर्बुद्धिनाशिनी असिरूपा 'असि'–नदी निर्मिता, या नूनं महासिरूपाऽसन्मतखण्डिनी, अपरतश्च उत्तरसीम्नि तथा क्षेत्रविघ्ननिवारिणीं वरणां नदीं देवा व्यदधुः। पश्चिमभागे च नगरस्य रक्षार्थं देहली-विनायकं महादेवं स्थापयामास, यदाज्ञां विना कोऽपि जनोऽनधिकारी पुरीं प्रवेष्टुं न क्षमः। ये खलु नूनं पुण्यशालिनस्तेषामेव प्रवेशोऽत्र भवति। इत्थं च महता पूर्वार्जितपुण्यप्रसादादेव वाराणसीवासः प्राप्यते जनैः।

## धनञ्जयाख्यानम्

भारतस्य सेतुबन्धस्य दिग्भागे मातृभक्तः कश्चिद्धर्मपरायणो वणिग् निवसति स्म। स स्वव्यापारवशात्सत्यानृतभावं दधदपि धर्माचरणशीलोऽर्थिजनसन्तोषकारी, रूपधनवैभवशाल्यपि परदारसेवनपराङ्मुखः सदा सुखयान(पालकी)गामी सत्यनिष्ठो बभूव।

सर्वगुणसम्पन्नस्य धनञ्जयस्य, युवावस्थायां कुलटा, व्यभिचारिणो माता परिणते वयसि व्याधिपीडिता पञ्चत्वमवाप। तस्या विष्ठागर्त्ते निरये दुर्गतिं कल्पयन् स वणिक्पुत्रो धनान्वितः सर्वमौर्ध्वदैहिकं कृत्यं सुसम्पाद्य जनन्याः सद्गत्यै उपायं विचारितवान्। यद्यपि स कुलटासुत आसीत्, तथापि केनचन शिवयोगिना सह वासेन धर्मपरायणोऽभूत्। अतो मातुरस्थि गङ्गाजले वाराणस्यां प्रक्षेप्तुं मतिमकार्षीत्।

स दुश्चारिण्या मातुरस्थीनि पञ्चगव्य-पञ्चामृतादिभिः संक्षाल्य नवनीतलेपनं कृत्वा वस्त्रवेष्टने वेष्टितं विधाय ताम्रपुटके निधाय तान्यादाय काशीं प्रति उत्तरां दिशं पदातिरेव प्रस्थितवान्।

यथाविधि विधानं कृत्वा एकाकी गच्छन् शीतादिप्रभावेण मार्गे ज्वरपीडितोऽस्थिभारं वोढुमसमर्थो जातः, ततश्च पणदानसमयेन कञ्चन भिल्लवाहीकं तदर्थं न्ययोजयत्। यात्रां विदधद् सायासं कष्टेनायासेन च काशीं प्राप्तः। तत्र एकत्र भारवाहिनं तदस्थिपुटकं रक्षायै समर्प्य भोजनादिसामग्रीव्यवस्थायै आपणं जगाम। स वाहीकश्च सुवर्णधनादिलोभवशात् तत्पुटकं गृहीत्वा वनं पलायितवान्। उद्घाट्य च तत्र पुटकेऽस्थीनि दृष्ट्वा तत्रैव तान्यस्थीनि प्राक्षिपत्। आगत्य धनञ्जयस्तत्र धर्मशालायां वाहीकं पुटकं चादृष्ट्वा तं वाहीकमनुसन्धातुं प्रवृत्तवान्, कथञ्चित्तं प्रयासतः प्राप्य तत्सर्वं वृत्तान्तं ज्ञात्वा शिरो धुन्वन् तेनैव तद्देशं गन्तुमना धनलोभेन भारवाहिनं वशीकृत्य वनमगच्छत्; किन्तु स वाहीकस्तत्स्थानं यथा विस्मृतवांस्तथा स वणिक्पुत्रोऽस्थीनि नष्टानीति विज्ञाय धर्मशालां प्राप्य विलपन् स्वदेशं प्रत्यस्थिविसर्जनमविधायैव प्रस्थानं कृतवान्।

इत्थं च तस्याः कुलटाया मातुरस्थीनि काशीं प्राप्यापि गङ्गाजलस्पर्शन वञ्चितानि तस्याः कुलटाया निरयवासाय कल्पयन्ति स्मेति। तद्यथा—

"एवं काश्यां प्रविश्याऽपि पापी धर्मानुषङ्गतः।
न क्षेत्रफलमाप्नोति बहिर्भवति तत्क्षणात्॥
तस्माद्विश्वेश्वराज्ञैव काशीवासेऽत्र कारणम्।
असिश्च वरणा यत्र क्षेत्ररक्षाकृते कृते॥

वाराणसीति विख्याता तदारभ्य महामुने।
असेश्च वरणायाश्च सङ्गमं प्राप्य काशिका॥

वाराणसीह करुणामयदिव्यमूर्त्ति-
रुत्सृज्य यत्र तु तनुं तनुभृत् सुखेन।
विश्वेशदृङ्महसि यत्सहसा प्रविश्य
रूपेण तां वितनुतां पदवीं दधाति"॥
(का० ख० ३०।६८-७१)

एतदनन्तरं द्विसप्ततितमश्लोकादारभ्य सप्तनवतितमश्लोकपर्यन्तमत्यन्तं सरसं काव्यलालित्यप्रचुरं सरहस्यं काशीमाहात्म्यवर्णनं पाठकैरवश्यमेवाध्येयम्। ततश्च यतोऽत्र रुद्रत्वा सायुज्यमुक्तिभाजो जीवा अनन्तानन्तसंख्याकास्तिष्ठन्तीत्यतोऽस्याः पुर्या 'रुद्रावासो'ऽपरं नाम। अग्रे च 'महाश्मशान'-'आनन्दकानना'ख्यायाश्चापि समुल्लेखो विहितः, सकारणं समहत्त्वं निरूप्यैतदपि निगदितम्। ततश्चात्र संसूचितं वर्तते यद् यतो नगरीयं शिवत्रिशूलोपरि भगवता शिवेन स्थापिता, अतोऽत्र कलिकालयोः प्रभावो भवति नैवेति दिक्।

## एकत्रिंशाध्यायपर्यालोचनम्—

### भैरवप्रादुर्भावः, काश्यां कालभैरवस्य महिमा च

अगस्त्येन पृष्टः स्कन्दो भैरवविषये समग्रं विवरणं कथयितुमारेभे। भैरवस्य कथाकथनप्रसङ्गेन काशीपुर्यां तस्य व्यवस्थितेर्विषये श्रीभैरवस्य यद्रूपम्, यानि कर्माणि, यानि किल नामानि, तानि सर्वाणि विवरणानि विवरीतुं प्रवर्त्तते स्म। अन्ये चापि भैरवसम्पृक्ताः पक्षा यथा हि साधकानां सिद्धिदो भैरवः कथमाराध्यः, कदा चाराधनीय इत्यादि पक्षा अपि तेन विवृताः।

भैरवो नूनं महापातकनाशनः। भैरवस्य प्रादुर्भावसंकीर्त्तनेनैव काशीवासफलानि मानवा लभन्ते। अत्रैकः श्लोको भैरवमाहात्म्यपरोऽवलोकनीयः —

"पाणिभ्यां परितः प्रपीड्य सुदृढं निश्चोत्य निश्चोत्य च
ब्रह्माण्डं सकलं पचेलिमरसालोच्चैः फलाभं मुहुः।
पायं पायमपातयँस्त्रिजगतीमुन्मक्षवत् तै रसै-
र्नृत्यँस्ताण्डवडम्बरेण विधिना पायान्महाभैरवः"॥
( तत्रैव—३१।७ )

यतो भगवतो महादेवस्य दुरत्ययाया मायाया महिमानं चतुर्मुखो विरञ्चिश्चतुर्भुजो विष्णुरपि न जानाति यदा, तदा किमत्राश्चर्यं यत्सर्वाणि जगन्ति तां कथां न जानीयुः। सर्वव्यापिनमपि महेश्वरं वाङ्मनोऽगोचरं न कोऽपि साक्षात्करोति।

अत्रास्त्येको वृत्तान्तः—एकदा सुमेरुश्रृङ्गे महर्षिगणा ब्रह्माणं त्वमन्यो वेति पप्रच्छुः । पृष्टो विधाता शाम्भवीमायामोहित आत्मानमेव सर्वं मन्यमानोऽब्रवीदहमेव केवलं जगद्योनिर्विधाता, स्वयम्भूश्च । मम पूजां विना न कोऽपि मुक्तो भवति । तच्छ्रुत्वा नारायणांशसम्भूतो यज्ञनारायणो देव आत्मानं सर्वश्रेष्ठं प्रत्यपादयत् । इत्थं च विवदन्तौ तौ परमप्रमाणभूत चतुर्वेदपुरुषं वादस्य निर्णयार्थं पृष्टवन्तौ । परमतत्त्वविषयं विवेचयन्तो वेदाः ऋग्यजुरादिक्रमेण, रुद्रं शिवं त्र्यम्बकं शङ्करमेव परमतत्त्वरूपेण प्रतिष्ठापयाञ्चक्रुः, विधियज्ञौ च हसन्तौ श्रुतिगणस्य वचनं प्रति तिरस्कारभावेन तस्य निर्णयमवहेलितवन्तौ । तद्वचनं च श्रुत्वाऽमूर्त्तोऽपि प्रणवो मूर्त्तिमान् भूत्वा तावुवाच—"लीलाधारी भगवान् शङ्करः स्वात्मनः शक्त्यातिरिक्तया अन्यया कयाऽपि सह न रमते । केवलम् उमारूपा शिवा एव शिवस्य तस्य स्वतन्त्रा शक्तिः ।

सत्यपीत्थं बोधिते यदा ब्रह्म-यज्ञयोरज्ञानं दूरं न गतम्, तदा द्वयोर्मध्ये स्वप्रभया द्यावापृथिव्योर्मध्यभागं परिपूरयदेकं ज्योतिः प्रादुरभूत् । तस्य मध्य एका पुरुषाकृतिरवभासते स्म । तां दृष्ट्वा ब्रह्मणः पञ्चमं शिरः क्रोधाग्निना प्रजज्वाल । केयं पुरुषाकृतिरिति वितर्कयन्नन्ततो ब्रह्मा निजगाद तं पुरुषं प्रति—"हे चन्द्रशेखर ! त्वां जानाम्यहं सम्यक् । पुरा त्वमेव मद्भालाद् उत्पन्नोऽतिरोदनशीलत्वाच्च त्वामहं रुद्रनाम्ना व्याहरम् । अतो वत्स ! त्वं मम शरणागतो भव, तवाहं रक्षणं करिष्यामीति" । कमलजन्मन इमां गर्वगर्भितां वाणीं श्रृण्वन्नेव शिवः क्रोधेन कञ्चन भैरवाकृतिमन्तं पुरुषमुत्पाद्य तामाकृतिमाज्ञापयन्नुवाच—"कालराज ! पङ्कजजं शासय" ।

**कालराज-भैरवः —**

कालराज-भैरव-कालभैरव–अवमर्दकपापभक्षणादीनि तव नामानि भविष्यन्ति । यतस्त्वं साक्षात्कालात्मना विराजसेऽतस्त्वं 'कालराजः', विश्वभरणसमर्थत्वाच्च 'भैरवः', कालोऽपि त्वत्तो बिभेतीति 'कालभैरवः', दुष्टानां मर्दकत्वाद् 'अवमर्दकः', भक्तानां पापभक्षकत्वाच्च 'पापभक्षणः' इत्येतानि तव नामानि प्रथितानि भविष्यन्ति । सर्वतो वरिष्ठायां काशीपुर्यां सदा तवाधिपत्यं भविष्यति । तत्रत्यानां जनानां शुभाशुभकर्मणां विवरणमपि चित्रगुप्तो न लिखिष्यति; अपि तु त्वमेव तेषां शासको भविष्यसि, पापानां पुण्यानां च कर्मणां फलदायकश्चेति ।

श्रुत्वैतानि वरदानवचनानि शम्भोर्भैरवो वामपाण्यङ्गुलिनखाग्रेण अपराधिब्रह्माणं पञ्चमं शिरश्चिच्छेद ।

दर्शं दर्शं चैतच्छङ्करचरितं सविष्णुपङ्कजजन्मानो देवाः सर्वे शम्भुं तुष्टुवुः । ब्रह्मविष्णू समाश्वसन् महादेवः स्वकीयामपरां मूर्तिं कपालभैरवनाम्नीमब्रवीत्—"हे नीललोहित ! ब्रह्मा यज्ञश्च तव सम्मान्यौ । ब्रह्मणः कपालमेतद्धृत्वा ब्रह्महत्यामपाकर्तुं कापालिकव्रतं समाचरन्, शिक्षयंश्च लोकान् कापालिकव्रतम्, दर्शयन् स्वचरितं भिक्षां चरेत्युक्त्वा सनातनः शिवोऽन्तर्बभूव ।

शिवश्च ब्रह्महत्यानाम्नीं कन्यां ससर्ज । सा किल रक्ताम्बरा, रक्ता, रक्तस्रगन्धलिप्ता, दंष्ट्राकरालवदना, ललज्जिह्वातिभीषणा, अन्तरिक्षैकपदाग्रा, रुधिरं पिबन्ती, कर्परहस्ता, स्फुरत्पिङ्गोग्रतारका, भैरवस्यापि कृते भीषणा, सततं गर्जयन्ती आसीत् । इदमपि च तां ब्रह्महत्यामादिष्टवान् यद् "यावदयं भैरवो वाराणसीं नाधिगच्छेत्तावत्त्वमेनं सर्वदाऽनुगच्छ । तव गतिर्वाराणसीं विहायान्यत्र सर्वत्रानिषिद्धा भविष्यति" इति । इत्थं च समादिश्य शिवोऽदृश्यो जातः ।

तस्या ब्रह्महत्यायाः प्रभावेण कालस्यापि कालो भैरवः कृष्णवर्णो बभूव ।

त्रैलोक्यनायको व्रतधारी उग्ररूपो भैरवः सत्यलोक-वैकुण्ठपुरी-ब्रह्मलोकादिकं पर्यटन्नपि अनुगच्छन्त्या ब्रह्महत्यया मुक्तो न बभूव । तीर्थयात्रादिकं समनुतिष्ठन्, व्रतं चरन्, पुण्यनदी-सरोवरादिषु स्नानं विदधन् तया स सर्वदाऽनुगम्यमान एव बभूव । ब्रह्महत्याया विध्वंसिनी काशी एवैकं पुण्यपत्तनम् । ब्रह्महत्यादयोऽघौघास्तावदेव गर्जन्ति, यावद्वाराणस्याः काश्या वा नाम न शृण्वन्ति ।

इत्थं च विचरन् कपर्दिभैरवः शिवस्यापरतनुभूतं नारायणनिकेतनं श्वेतद्वीपमाजगाम । गरुडध्वजश्च तं प्रणम्य स्तोत्रैस्तं स्तुवन् लक्ष्मीं प्रत्यब्रवीत्— "कमलनेत्रे ! आवामद्य धन्यौ यद् भगवान् देवदेवो योगिभिर्हृदि ध्येयोऽस्मत्समक्षमागत्य लोचनविषयीभूतः । यस्य नामसंकीर्तनेनैव पुनर्देहधारणान्मुक्तिर्भवति, सोऽयं शङ्करः साक्षात् । इत्यादिवचनान्युक्त्वा प्रणिपत्यैनं प्रणतः कमलापतिरञ्जलिबद्धः पुनरपि देवं निन्दन् प्रोवाच—

"धिग् धिक् पदं तु देवानां परं दृष्ट्वाऽत्र शङ्करम् ।
लभ्यते यन्न निर्वाणं सर्वदुःखान्तकृत्तु यत्" ॥

( का० ख० ३१।७८ )

पुनश्च विष्णुः कपर्दिभैरवरूपं शङ्करं जिज्ञासते स्म यत्सर्वदोऽपि स तेन रूपेण कस्माद्भिक्षाटनं कुरुते ? समाधानं च विदधता हिमांशुशेखरः कपर्दी व्यज्ञापयन्नखेन ब्रह्मणो मूर्ध्नः पञ्चमस्य कर्त्तनवृत्तान्तं न्यवेदयत्, तन्निवृत्त्यर्थं च शुभव्रतस्याचरणविधानम् ।

विष्णुश्चापि सस्मितवदनः सृष्टिस्थितिसंहारकारिण ईशानस्य महिमानं वर्णयन्, तस्य नाम्नो महत्त्वं मुक्तिदायकत्वं कीर्त्तयन्निवेदयाञ्चकार यद् इयं लीलापुरुषस्य सर्वेश्वरस्य क्रीडा, या खलु जनानां बोधागम्येति । तदनन्तरं च रमारमेश्वरवचनात्कपर्दिनः शङ्करस्य भिक्षापात्रे शुद्धा 'मनोरथवती'त्यभिधाना भिक्षा क्षीरोदतनया समर्पिता ।

तदनन्तरं भैरवदेवो भिक्षां गृहीत्वा ततो लोकान् पुनरप्यटितुमारेभे । ब्रह्महत्याऽपि चाब्रवीद्यदेतेनैव मिषेणाहं चन्द्रशेखरस्यान्यथादुर्लभं दर्शनमनुचररूपत्वं च प्राप्ता । यतो हि शूलिनो नीलकण्ठस्य दृक्पथप्राप्तिः सुधावृष्टिकल्पा । तदनन्तरं च शर्वाग्रहेण विष्णुः शङ्कराद् वरमयाचत—

अवियोगोऽस्तु मे देव ! त्वदङ्घ्रियुगलेन वै ।
एष एव वरो देयो नान्यं कञ्चिद्वरं वृणे ॥
( का० ख० ३१।११० )

एवं प्रकारेण जनार्दनमनुग्राह्य वरं दत्वा मुण्डमाली भैरव इन्द्रलोकादीन् परिभ्रमन् काशीपुरीं समाजगाम, यत्र जटामुण्डधारो दिगम्बरोऽपि नरः श्रेष्ठोऽन्यत्र लक्षाधिपत्यपेक्षया ।

तत्पश्चाद्वाराणस्यां काशीपुर्यां भैरवस्य काशीपुरीप्रवेशो वर्ण्यते स्म । काशीप्रवेशक्षण एव भैरवस्यानन्यानुचरी हाहेति रवं रोरूयमाणा ब्रह्महत्या झटिति भैरवानुसरणं परित्यज्य पलायमाना पातालपुरीं प्रविवेश । काशीप्रवेशो नूनमनन्तपुण्यफलेनैव भवति, स नूनं सर्वेभ्यो दुर्लभः । भैरवेण प्राप्तः प्रवेशस्तत्र शिवप्रसादात्, ब्रह्महत्यया च मुक्तिर्लभ्यते स्म कालराजेन । काश्या महिमा अनन्तः ।

कालभैरवश्चात्र कपालमोचनं तीर्थं सम्मुखीकृत्य भक्तानां समग्राणि पापानि भक्षयन् क्षेत्रेऽस्मिन् सदैव विराजते । काश्या महनीयस्त्वं यथा वर्णनातीतम्, तथैवात्रस्थकालभैरवस्यापि । कालभैरवस्य मन्दिरं भैरवनाथाख्ये ( भैरोनाथनामके ) मुहल्लायां वर्तते । तस्य स्मरणमात्रेणाशुभानि सकलानि नश्यन्ति । मार्गशीर्षकृष्णाष्टम्यां तस्य दर्शनस्य सर्वाधिकं महत्त्वम् । यदा कदापि रविवासरे, भौमवासरे, अष्टम्यां चतुर्दश्यां वा भैरवदर्शनस्य काश्यां विशिष्टो महिमा । यात्राया अपि विशिष्टा महत्ता । ( कृतानां सकलानां पापानां दण्डभोगो यतोऽवश्यम्भावी, अतः काशीक्षेत्रे मृतानां प्राणिनां मरणानन्तरं भैरवीयातनया त्वरया दीयमानया सर्वनिरयकल्पवासकल्पया क्षणमात्रेण यातनाभोगोऽन्तर्हितो भवति । शिवप्रदत्ततारकमन्त्रप्रदानाच्च जीवस्य सर्वाणि मोहान्धकाररूपाज्ञानानि भस्मभूतानि जायन्ते, ततश्च मुक्तिलाभः काश्यां मरणमात्रेणेति गुरवोऽभियुक्ताः । )

कालोदकतीर्थे स्नानतर्पणादिभिः पितरस्तृप्यन्ते । कालभैरवस्य काश्यां महिमा अपरम्पारः । एकत्रिंशाध्यायस्थश्लोकेषु स मननीय ।

**द्वात्रिंशाध्यायपर्यालोचनम्—**

हरिकेशाख्यानम्

कुम्भोद्भवस्य जिज्ञासां समाधातुं हरिकेशाख्यानमाख्यातुं तपोबलेन दण्डपाणिपदलाभस्य सर्वं वृत्तान्तं वर्णितुं चोपक्रमते ।

गन्धमादनपर्वते श्रीसम्पन्नो रत्नभद्रो नाम यक्षो निवसति स्म । पूर्णभद्राख्यं पुत्रं सम्प्राप्य भुक्त्वा च सकलान् भोगान् यथाकाले शैवयोगबलेन पार्थिवं विग्रहं विहाय शिवत्वमाप्नोत् । तस्य धर्मात्मा तनुजोऽपि निखिलान् भौतिकभोगान् भुञ्जानोऽपत्यप्राप्तिसुखवञ्चितो बभूव । तस्य भार्याऽपि साध्वी कनककुण्डला छायेव तस्यानुगामिनी । पूर्णभद्रः स्वां सहधर्मिणीं सम्बोधयन् निजगाद—कथमहं पुत्रमुखमपश्यम् ? यतो हि विनापत्यं सर्वो भोगो निरर्थकः —

यद्युपायोऽस्ति तद्ब्रूहि धिगपुत्रस्य जीवितम् ।
सर्वं शून्यमिवाभाति सर्वमेतद्गृहं वनम् ॥
धिगेतत्सौधसौन्दर्यं धिगेतद्धनसञ्चयम् ।
विनापत्यं प्रियतमे जीवितं च धिगावयोः ॥

( का० ख० ३२।२६-२७ )

सा च स्वभर्त्तारमाश्वासयन्तो, पूर्वजन्मकृतकर्मैव दैवं ब्रुवन्ती, शिवाराधनेन पुत्ररत्नप्राप्तिं सूचयन्ती, सर्वाराध्यस्य काशीश्वरस्य शिवस्यापारं महिमानं निर्दिशन्ती, वाराणसीपुरपतेर्नादिश्वरस्य शिवस्याराधनाय पूर्णभद्रं प्रेरयामास । तथा चानुष्ठिते हरिकेशाख्यस्तनयो जातः । स चाष्टवर्षीय एव परमशङ्करभक्तोऽभवत् । धूलिक्रीडावेलायां रजोमयं शङ्करलिङ्गं निर्माय हरितदूर्वाङ्कुरैस्तद् भक्त्याऽपूजयत् । वयःप्राप्तोऽपि वारं वारं पितुरादेशमशृण्वन् सानुरोधवचनञ्च तिरस्कृत्य शिवपूजापरायण एव हरिकेशः समयमयापयत् । शृण्वन्, वदन्, भुञ्जानः, पिबन्, किं बहुना स्वपन्, जाग्रंश्च शिवभक्तिपरायणो बभूव ।

पद्भ्यां न पद्यते चान्यदृते भूतेश्वराजिरात् ।
द्रष्टुं रूपान्तरं तस्य वीक्षणे न विचक्षणे ॥
क्षणदासु प्रसुप्तोऽपि क्व यासीति वदन् मुहुः ।
क्षणं त्र्यक्ष ! प्रतीक्षस्व बुद्ध्यतीति स बालकः ॥

( तत्रैव—३२।५६, ६० )

वयस्कं हरिकेशं पिताऽऽगृह्णीयादतुलधनसम्पत्त्यैश्वर्यविभूत्यादिभोगसुखप्राप्तये; परन्तु स शङ्करोपासनैकमनाः सर्वमन्यदवमन्यत । यदा यदा पूर्णभद्रो जनकोऽशिक्षयद् धूलिधूसरितं शिवोपासनाकर्म विहाय, दरिद्राणां चेष्टा दूरीकृत्य, वाणिज्यविद्यां

शिक्षस्वेत्यादि, तदा तदा तेषु तेषु भोगेषु वाणिज्यादिव्यवहारेषु च तस्यारुचिर्व्यवर्धत। एकदा च पितू रुग्रदृष्टिमवलोक्य बिभ्यन् स गृहात् पलायितः, बहुचिन्तामग्नश्चान्ततो स वाराणसीं प्राप्नोत्—

"भर्ज्यते कर्मबीजानि यत्र विश्वेशवह्निना।
अहो महाश्मशानं तदगतीनां परम्परा॥
हरिकेशो विचार्येति यातो वाराणसीं पुरीम्।
यत्राविमुक्ते जन्तूनां त्यजतां पार्थिवीं तनुम्॥
पुनर्नो तनुसम्बन्धस्तनुः शिवप्रसादतः" ॥ (का०ख० ३२।८२-८४)

व्यतीते च काले कदाचित् सोमशङ्कर आनन्दवनं प्रविशन् हिमाचलतनयां वनस्यास्योद्यानस्य शोभामदर्शयत्[1], अब्रवीच्च—

"अत्रानन्दवने देवि! मृतानां मदनुग्रहात्।
वपुस्त्वमृततां प्राप्तमपुनर्भविनस्तु ते" ॥ (तत्रैव—३२।११२)

पुनश्च काश्यां मरणमात्रेण मुक्तिर्लभ्येति प्रकरणं विस्तरेण निर्दिष्टम्। तदनन्तरं शिवः शिवां प्रति काश्या नानामहत्वानि स्वकीयप्रियत्वं च सूचयति। अनुष्ठितेष्वपि बहुषु साधनेषु योगिनोऽनेकजन्मसु योगभ्रष्टा भूत्वा संसारे निपतन्ति; परन्तु काश्यां मृता नरा नूनमेकेनैव जन्मना मोक्षं प्राप्नुवन्ति। भगवच्छङ्करानुग्रहेणाविमुक्तक्षेत्रे जीवा यादृशमपुनर्भवत्वं लभन्ते, तादृग् नान्यत्र कुत्रचित्।

एवमादीनि काशिवास-काशिमरणरहस्यानि चन्द्रभालेन भवान्यै ज्ञापितानि। घोरतमे कलिकाले च—

"कलौ विश्वेश्वरो देवः कलौ वाराणसी पुरी।
कलौ भागीरथी गङ्गा कलौ दानं विशिष्यते॥
गङ्गोत्तरवहा काश्यां लिङ्गं विश्वेश्वरं मम।
उभे विमुक्तिदे पुंसां प्राप्ये दानबलात्कलौ" ॥
(तत्रैव—३२।१२५-१२६)

---

१. अत्र ८७ तमः श्लोको द्रष्टव्यः—

"अमन्दामोदमन्दारं कोविदारपरिष्कृतम्।
चारुचम्पकचूताढ्यं प्रोत्फुल्लनवमल्लिकाम्" ॥

इत्यारभ्य परमरमणीयं प्रकृतिसुषमावर्णनप्रौढं वक्रोक्ति-गुणरीत्यलङ्कारोद्गारगरिष्ठं रसभावपेशलमानन्दोद्यानं काव्यलालित्यरुचिरमत्र पुराणकारेण यद्भणितम्, तदवश्यमेव सहृदयसामाजिकैरास्वाद्यम्, यस्यान्तिमं छन्दः—

चन्द्रकान्तशिला सुप्तकृष्णणहरितोडुपम्।
तरुप्रकीर्णकुसुमैर्जितस्वर्लोकतारकम् ॥
दर्शयन्नित्थमाक्रीडं देव्यै देवोऽविशद्वनम्॥ (का० ख० ३२।११०)

क्षेत्रसंन्यासस्यापि वाराणस्यामपरम्पारो महिमा गीयते। विघ्नैः शतैरपि भूयो भूयो हन्यमानेन मर्त्येन काशीपुरी न हातव्या। शिवो वदति यत् "काशिवासिनो मनुजा मदीय एव गर्भे निवसन्ति। ममाप्येषा पुरी हिमशैलादपि प्रियतरा"। इत्थमेव च काशिमाहात्म्यमुद्गिरन् भगवान् शिवोऽशोकतरुमूलस्थितं घोरतपश्चरणपरायणमस्थिचर्ममात्रावशिष्टगात्रं केवलं श्वासोच्छ्वासकम्पितवक्षसं जीवितमिति सूचयन्तं हरिकेशं स्वभक्तिरतं ददर्श। ज्ञात्वा च तस्य निखिलं वृत्तान्तम्, श्रावं श्रावं तस्यापूर्वां लोकविलक्षणां शिवभक्तिनिरततां परमसन्तुष्टौ शिवाशिवौ बभूवतुः। उमाया आग्रहेण सर्वेश्वरः शर्वस्तस्मै बहून्यभिलषितानि वरदानानि प्रदत्तवान्।

(१) प्रथमेन वरेण हरिकेशं काश्यां दण्डधरो न्ययोजयत्, स्थिररूपेण काशीं निवसता दुष्टानां शासनाय भक्तानां परिपालनायादेशयत्।

(२) द्वितीयेन सम्भ्रम-विभ्रमनामानौ द्वावनुचरौ स्थायिरूपेण तस्य वशवर्तिनावाज्ञाकारिणावनुगामिनौ तस्मै दत्तवाँच्छूली।

(३) तृतीयेन काशिवासिनां कृते दण्डपाणिनं हरिकेशं ज्ञानदातृ-प्राणदात्र्यन्नदातृत्वकार्यभारः समर्पयत्।

(४) चतुर्थेन तमाज्ञापयदस्मिन् वाराणसीक्षेत्रे तवाराधनां विना न कोऽपि मुक्तिमेष्यतीति। मदाज्ञया च तव नाम ततः प्रारभ्य दण्डपाणिर्भविष्यति।

(५) समग्रशिवगणानां च तमग्रगण्यत्वं प्रादात्।

(६) ज्ञानवाप्याख्ये तीर्थेऽत्र स्नात्वा श्राद्धतर्पणादिकं च विदधता नरेण मुक्तिर्लभ्या।

ततश्च शिवाशिवावानन्दकाननं प्रविशतुः। तत आरभ्य दण्डपाणिः पूर्णरीत्या काशीक्षेत्रं शास्ति स्म।

एतदनन्तरं दण्डपाणिस्तुतिपरकं यक्षराजाष्टकस्तोत्रं वर्तते, यद्धि नित्यं पठनीयं दण्डपाण्यनुग्रहावाप्तये। दण्डपाणिं च विश्वेश्वरसम्मुखं स्थातुं भवानीधवः समादिशत्। दण्डपाणिश्च कञ्चन जनं विरुद्धमाचरणमाचरन्तं काशीतो बहिष्करोति[1]।

---

१. वाराणस्यामनेका दण्डपाणि-प्रतिमाः सन्ति। तासां तासां पूजनं भवति। कालभैरवस्य मन्दिरसमीपे 'दण्डपाणि की गली' नामकं मुहल्ला-स्थानमस्ति। विश्वनाथमन्दिरनिकटेऽप्यनेका दण्डपाणिमूर्तयः सन्तीत्यलं विस्तरेण।

## त्रयस्त्रिंशाध्यायपर्यालोचनम्—

### ज्ञानवापीतीर्थवर्णनम् (ज्ञानोदकतीर्थमाहात्म्यम्)

अस्मिनध्याये ज्ञानवाप्या महिम्नो वर्णनमस्ति । पार्वतातनयमुखेन कुमार-स्कन्दमाध्यमेन ज्ञानोदकतीर्थस्योत्पत्तिकथा सर्वतः पुरस्तादाख्याता ।

सत्ययुगस्यारम्भे तदानादिसिद्धे संसारे सर्वशून्यमिवाभवत् । न नद्य आसन्नो वा मेघाऽभवन्न च जलवृष्टिर्बभूव । केवलं लवणाकर एव जलदर्शनमभवद्यत्पानीयमपेयम-स्नानीयं सर्वक्रियाऽयोग्यमासीत् । यत्र तत्र शनैः शनैः क्षितिखण्डस्य दर्शनं यदा कदा बभूव ।

ततश्चेतस्ततः परिभ्रमन्नीशानाख्यो दिक्पालो तां धरित्रीं समाजगाम यत्र—

महाश्मशानसुप्तानां जन्तूनां प्रतिबोधकम् ।
संसारसागरावर्त्तपतज्जन्तुतरण्डकम् ॥
याताथातातिसंखिन्नं जन्तुविश्राममण्डपम् ।
अनेकजन्मगुणितकर्मसूत्रच्छिदा क्षुरम् ॥
सच्चिदानन्दनिलयं परब्रह्मरसायनम् ।
सुखसन्तानजनकं मोक्षसाधनसिद्धिदम् ॥

( का० ख० ३३।७९ )

निर्मलकिरणजालविलसत्त्रिशूलेन जटिल ईशानः प्रविश्य तत्क्षेत्रं ददर्श, यत्किल तत्र ज्योतिर्मयं लिङ्गमस्ति, यस्य प्राकट्यं ब्रह्मविष्णोर्महानहं महानहमित्यहमि-कया जातम् । तस्य च चतसृषु दिक्षु ज्योतिर्मयी माला तल्लिङ्गं परिवेष्टयन्ती बभूव । यत्र च ऋषि-मुनि-सिद्ध-विद्याधरगन्धर्वप्रभृतयो नृत्यन्ते भजन्ते स्म ।

तज्ज्योतिर्मयं लिङ्गं दर्शं दर्शमीशानं लिप्सा अजायत यदीदं नूनं शीतल-जलमयकलशसलिलैः स्नापयामि । तेनाभिलाषेण सम्प्रेरितो रुद्रमूर्त्तिरीशानस्त्रिशूलेन कुण्डमेकं ज्योतिर्लिङ्गदक्षिणदिशि चखान । ततश्च जलप्रवाहः प्रादुरभूत् । तत्स-लिलं स्पर्शमात्रेणाज्ञानतिमिरविध्वंसकम् । तस्य सहस्रधारजलैः शीतलैरीशानो ज्योति-र्लिङ्गं सुष्ठु स्नापयामास ।

तैः पावनतमजलधारैः जलाभिषेकं विदधन्तं ज्योतिर्लिङ्गरूपः काशीश्वरो विश्वनाथो ज्ञानवापीजलं प्रशंसन्, तस्य नानाविधानि माहात्म्यानि वर्णयन्, ज्ञानोदक-तीर्थस्य जलस्पर्श–स्नान–रुद्राभिषेकाचमन–श्राद्धपिण्डादिक्रियानिष्पादनस्यातुलित-फलजनकत्वं घोषयन्नास्ते । तस्य कुण्डजल-दर्शनस्यापि तेन महिमा वर्णितः ।

इत्थं वरान् वितीर्य माहात्म्यं च समुद्घोष्य भगवांच्छम्भुरन्तर्हितो बभूव ।

## मदनसुन्दर-कलावत्योराख्यानम्

एतस्मिन् क्षेत्रे काचिदपूर्वा घटना घटिता। पुरा काले हरिस्वामीति नाम्ना विख्यातः कश्चिद् ब्राह्मणो वाराणसीमुवास। तस्यैका कन्या जाता। रूप-गुण-शीलादि-सम्पत्त्या सुशीलेत्याख्यया सा ख्याता बभूव। तस्मिन् युगेऽन्या काचित्तादृशी शीलसम्पत्ति-शालिनी कन्या धरायां नासीत्।

न नारी तादृगस्तीह नामरी किन्नरी न च।
विद्याधरी न नो नागी गान्धर्वी नासुरी न च॥
सर्वसौन्दर्यनिलया सर्वलक्षणसत्खनिः।
अधिशेते ध्रुवं ध्वान्तं तन्मौलिब्रध्नसाध्वसात्॥
(का० ख० ३३।५६-५७)

तस्या अपूर्वं ललिताङ्गनिवेशपुञ्जं लावण्यमिह स्कन्दमुखेन पुराणकारो वर्णयन् न तृप्यते स्म। एतदेवाभिप्रेत्यालङ्कारनिर्झरसहजसुभगं तस्याः कलेवरसुषमां शिख-नखक्रमेण रूपसमृद्धिमवर्णयच्छृङ्गाररसाधारभूतद्विविधविभावविभूतिरमणीयं पञ्चपञ्चा-शत्संख्याकछन्दस आरभ्यैकोनसप्ततिसंख्यकेषु श्लोकेषु वपुःसौन्दर्यवर्णनं काव्यरसिक-दृष्ट्याऽऽस्वाद्यं सामाजिकैः। बहुभिः पुरुषपुङ्गवैः, राजकुमारैः, श्रेष्ठिप्रभृतिभिः प्रार्थितोऽपि पिता तां कस्मैचन सद्वराय नादात्। सा च भक्तिमती ज्ञानोदकसेवासंसक्त-मानसा इतस्ततः सर्वत्र स्वप्नेऽपि शिवलिङ्गमेव पश्यन्नास्ते। सुनयनाऽपि कस्यचिन्नाय-कस्य मुखं नापश्यत्।

तदनु कश्चिद्विद्याधरकुमारो निशि सुषुप्तामुच्छलत्सौन्दर्यराशिपरिपूर्णां सुकुमारीं दर्शं दर्शं तदीयसौन्दर्यप्राचुर्येणापहृतचित्तस्तां प्रति मोहितस्तामपहृतवान्। एतदेवाभ्यन्तरे यदा विद्याधरस्तां मलयपर्वते नेतुमियेष, तदैव मार्गे कश्चिद्विद्युन्माली नामको राक्षसः सहसाऽऽजगाम। स च—

राक्षसो भीषणवपुः कपालकृतकुण्डलः।
वसारुधिरलिप्ताङ्गः श्मश्रुलः पिङ्गलोचनः॥ (तत्रैव—३३।७९)

कठोरवाण्या च विद्याधरं कुमारं भर्त्सयामास। तयोः प्रवृत्ते भीषणे युद्धे विरुद्धवचनादानप्रदानौ कुर्वन्तौ तौ निष्प्राणावभूताम्। कन्या च सुशीला तस्य कुमारविद्याधरस्य प्रेममयमृदुलस्पर्शेन मोहिता म्रियमाणेन विद्याधरेण 'सुशीति' प्रेमसम्पृक्तेन अर्द्धनामग्रहणेन च तं कुमारं प्रति प्रणयवशीकृतहृदया तं च पतिं मत्वा तद्विरहाग्निना दग्धा मृता बभूव।

काले च व्यतीते प्रणयपरवशीभूय मृतो विद्याधरकुमारो राज्ञो गृहे जन्म लेभे, यस्य नामातिशयसुन्दरत्वान्मदनसुन्दरो बभूव। हरिस्वामिपुत्री सुशीलापि तमेव प्रणयिनं स्मरन्ती मरणानन्तरमन्यस्मिन् जन्मनि कर्णाटकराजपुत्री बभूव, यस्या नाम कलावती अभवत्। पूर्वसंस्कारवशाद्द्वयोः परिणयः संजातः। तदापि सा ज्ञानोदकतीर्थ-भक्तिसंस्कारेण शिवलिङ्गपूजनतत्परा सदा भगवन्तं शङ्करं पूजयामास। दाम्पत्य-जीवने सर्वान् भोगान् प्राप्य त्रीन् पुत्रान्सा लेभे; परन्तु तस्या मनसि शिवभक्ति-भावस्य सदा प्राचुर्यमासीत्।

एकदा उत्तरदेशीयेन केनचिच्चित्रकारेण सा एका चित्रपटी (मानचित्रम् = नक्शा) काश्या लब्धवती। तां दर्शं दर्शं तस्या मनसि वैराग्यं समजनि, काशीदर्शनलालसा च प्रबला जाता। तस्यां हि वाराणस्यां वरणासिमध्ये स्थितानां क्षेत्र-तीर्थ-मन्दिर-वापी-कुण्ड-कूप-देवप्रतिमा-नदी-नदिकाप्रभृतीनां मानचित्राण्यासन्। क्षेत्रसंन्यासिनश्च या काशीयात्रा विहिता, तस्याः सोमासहितानि चित्राण्यप्यासन्। तत्सर्वं विस्तरेण चित्रितं समवलोक्य पूर्वजन्मसंस्कारजभक्तिवशात् तस्याश्चेतसि एतादृशी समुत्सुकता जाता, यया परवशा सा पतिं स्वकाशीगमनायाभ्यर्थितवती। पतिश्चापि धार्मिको भुक्तसमग्रत्रिवर्गसुखश्चतुर्थाश्रमकर्त्तव्यचेता तया सह वाराणसीं समागच्छत्[१]।

---

१. (क) पञ्चक्रोशी वाराणसीयात्रा साधारणभक्तानामपरा। क्षेत्रसंन्यासिनां तु काशीयात्रा किञ्चिद्भिन्ना। काशीयात्रानामके पृथगपि प्रकाशिते लघुग्रन्थे स्वकीयवक्तव्ये संक्षेपेण तस्या निर्देशो मया कृतः। अस्मिश्चाध्याये तद्वर्णनं किञ्चिद्विस्तरेण समाहात्म्यं द्रष्टव्यम्।

(ख) ज्ञानवापीतीर्थं ज्ञानोदकतीर्थं च मुक्तिमण्डपे स्थितस्य विशालनन्दिमूर्तितः पश्चिमपार्श्वेऽस्ति। सर्वतः प्रथमं विश्वनाथनिलयं वर्तमानादिविश्वेश्वरसमीपे आसीत्। सम्प्रति तु तन्मन्दिरमस्ति यस्य निर्माणं मुसलिमपातशाहेन खण्डिते पुनर्निर्मिते श्रीविश्वेश्वरमन्दिरे भक्तिपरायणयाऽनेकमन्दिरपुनर्निर्माणदत्तचित्तया श्रीमत्यहिल्याबाईनामिकया विश्वनाथमन्दिरस्य निर्माणं कृतम्। अनयैव गुर्जरप्रान्तस्यैकं सोमनाथशिवमन्दिरं पुनर्निर्मितम्। अपरान् अपि देवालयानियं पुण्याचरणशालिनी पुनर्निर्मापितवती। अतोऽस्यां चित्रपट्यां कुत्रकुत्रचिन् मन्दिराणां स्थाननिर्देशो भिन्नः। इत्थमेव च श्रीविश्वनाथशिवालयसन्दर्भेऽप्यवगन्तव्यम्।

अस्यां चित्रपट्यां किरणा-धूतपापा-सरस्वत्याख्यानां स्रोतसामपि समुल्लेखोऽस्ति । यत्र च कालभैरवद्वारा ब्रह्मकपालस्य पतनं जातम्, तस्य कपालमोचनतीर्थस्य, मन्दाकिन्या अपि वर्णनमस्ति ।

रत्नेश्वर-कृत्तिवासेश्वर-ओङ्कारेश्वर-भारभूतेश्वरादीनामपि वर्णनमस्ति—

रत्नभूतमिदं लिङ्गं तेषु रत्नेश्वराभिधम् ।
रत्नेश्वरप्रसादेन भुक्त्वा रत्नान्यनेकशः ॥

( का० ख० ३३।१६५ )

इत आरभ्याध्यायपर्यन्तं सर्वे श्लोकाः पठनीया मननीयास्तेषु निर्दिष्टानां देवस्थानानां देवानां चाभिज्ञानदर्शनपूजनानि काशिवासफलप्रेप्सुभिरवश्यं विधेयानि ।

अत्रैव एको रूपकालङ्कारोऽपि मननीयः ।

(१) एतस्य पठनेन विज्ञाप्यते यत्काशिखण्डनिर्माणकाले नगराणां विशेषतो धार्मिकधाम्नां चित्रपट्यो निर्मीयन्ते स्म । यासु सुस्पष्टं सुष्ठु च तत्तत्स्थानानां निर्देशा भवन्ति स्म । अत्रैतदपि परिकल्पितुं शक्यते यत्तत्र स्थाननामनिर्देशोऽपि सम्भवतः आसीत् ।

(२) एतदपि संसूच्यते यच्चित्रपटी-( मानचित्र = नक्शा )काराः सम्भवतः सर्वेक्षणं कृत्वैव चित्रपटीरचनां कुर्वन्ति स्म ।

(३) सर्वेक्षणप्रभावाच्च दिङ्निर्देशोऽपि तत्राभवत् ।

(४) तीर्थभूतनगराणामेतादृश्यश्चित्रपट्यः प्रचलिता बभूवुः ।

(५) काश्या विवरणात्मिका चित्रपटो केनचिदुत्तर(भारत)देशवासिना विरचिता आसीत् । अन्तिमाश्च काशीतीर्थनिर्देशकाः केचन श्लोकाः विभावनीयाः —

एष विश्वभुजा देवी विश्वैकजननी परा ।
असौ वन्दी महादेवी नित्यं त्रैलोक्यवन्दिता ॥
निगडस्थानपि जनान् पाशान्मोचयति स्मृता ।
दशाश्वमेधिकं तीर्थमेतत्त्रैलोक्यवन्दितम् ॥
यत्राहुतित्रयेणापि अग्निहोत्रफलं लभेत् ।
प्रयागाख्यमिदं स्रोतः सर्वतीर्थोत्तमोत्तमम् ॥
अशोकाख्यमिदं तीर्थं यत्र गङ्गाकेशव एष वै ।
मोक्षद्वारमिदं श्रेष्ठं स्वर्गद्वारमिदं विदुः ॥

( तत्रैव—३३।१७७-१८० )

एतत्सर्वं वर्णनं चित्रपटीं दर्शं दर्शं राज्ञी पूर्वजन्मसंस्कारवशाद् विवृतवती ।

## चतुस्त्रिंशाध्यायपर्यालोचनम्—

### ज्ञानवाप्याः प्रशंसनं मलयकेतु-(माल्यकेतु) कलावत्योर्निर्वाणकथा च

सा कलावती सकृत् समस्तां चित्रपटीं निभाल्य पुनरपि स्वर्गद्वारस्य पुरोभागेऽवस्थितां मणिकर्णिकां सस्पृहलोचनाभ्यां विलोकितवती। एतस्या मणिकर्णिकाया एकमपूर्वं वैशिष्ट्यं यदत्र—

संसारसर्पदष्टानां जन्तूनां यत्र शङ्करः।
अपसव्येन हस्तेन ब्रूते ब्रह्म स्पृशन् श्रुतिम्॥

तपः कर्तुं न शक्ता ये दानं वा दातुमक्षमाः।
योगाभ्यासविहीना ये तेषामेषा विमुक्तिदा॥

सन्त्युपायाः सहस्रन्तु मुक्तये न तथा मुने।
हेलयैषा यथा दद्यान्निर्वाणं मणिकर्णिका॥

(का० ख० ३४।२१८–१९)

इयं हि मणिकर्णिका नूनं भगवतोऽष्टमूर्तिमतो हिमांशुशेखरस्य जलमयी खलु साक्षान्मूर्त्तिः। इत्थं च कलावती बहुभिश्छन्दोभिर्मणिकर्णिकामहिम्नः स्तवं कुर्वन्नास्ते। तदनन्तरं च सा विश्वेश्वरस्य दक्षिणे भागेऽवस्थितां ज्ञानवापीमवलोकितवती।

कलावती किल ज्ञानवापीं पश्यन्ती क्षणमात्रेण कदम्बकुसुमवद्रोमाञ्चिता जाता। सर्वाङ्गे कम्पनमभूत्। कलेवरं तस्या स्वेदस्विन्नं बभूव। कण्ठमपि वाष्पगद्गदमभवत्कलावत्याः। अन्ततश्च सा सात्त्विकभावोदयजातया मूर्च्छया मूर्च्छिताऽभूत्। शीतोपचारोपचारिताऽपि सा मूर्च्छां न तत्याज; परन्तु कयाचिदुपचारिकया प्रबुद्धा सा चित्रपटयामिष्टदेवतादर्शनं कृत्वा मूर्च्छां विहाय स्वस्था, पूर्वजन्मस्मृतिमती चाभवत्। तदारभ्य पुनर्ज्ञानवाप्या माहात्म्यं चिन्तयामास। अहो! चित्रपटीगताऽपि या ज्ञानवापी मूर्च्छामिज्ञानावस्थामपाकृता, तस्याः प्रत्यक्षदर्शनफलं निश्चयमेव कल्पनातीतम्। इत्थं च सा स्वपूर्वजन्मवृत्तान्तं यदा हरिस्वामिनस्तनया सुशीलाभूत्तस्य जन्मनः 'सर्वं वृत्तेतिजातं वर्णयितुमारेभे। एतदप्यकथयत्सा सुशीलाहमेव, स च विद्याधरो मलयकेतुः।

ज्ञानवाप्याश्चित्रपटीदर्शनमात्रेण पूर्वजन्मवृत्तस्मरणजाताहम्। तत्सर्वं वृत्तजातं श्रुत्वा तत्क्षेत्रस्य महिमानं च श्रावं श्रावं सर्वाः सख्योऽनुचर्यश्च ज्ञानवापीदर्शनोत्कण्ठया व्याकुलीभूय कलावतीं तत्राधिगन्तुं प्रार्थितवत्यः। कलावती च पुत्रत्रयवन्तं राजानं तत्र गन्तुमाज्ञां याचितवती। स्वाभिलाषपूर्त्यै भूयो भूयो मलयकेतू राजा प्रोवाच—"देवि, पितृ-ऋणान्मुक्तावावां पुत्रत्रयजन्मतः। सर्वेषां राजकीयसुखवैभवानां

सुष्ठु भोगोऽप्यावाभ्यां समास्वादितौ । त्रिवर्गाणां ( धर्मार्थकामानां ) सर्वाणि कर्माण्यपि आवां सम्यगनुष्ठितवन्तौ । अतोऽहमपि सहचारिण्या सहैव राज्यभारं कुशलेषु मन्त्रिसहायेष्वपत्येषु च निधाय काशीं गमिष्यामि, ज्ञानवाप्याश्च दर्शनं करिष्यामि । त्रिचतुर्थयोराश्रमयोश्चानुष्ठेयान्यनुष्ठास्यामि" इत्युक्त्वा मदनसुन्दरः कर्णाटकेश्वर-तनयया कलावत्या सह काशीं प्रति ज्योतिर्विद्याविशारदैर्विचारिते शुभे लग्ने शुभे दिने प्रस्थितः । कलावती च पूर्वजन्मस्मरणशक्तिवशाद्दूरत एव सर्वान् ग्रामान् सर्वांश्च मार्गानभिज्ञातवती ।

तदनन्तरं द्वावपि तौ मणिकर्णिकाकुण्डं प्राप्य तत्र विधिपूर्वकं स्नानं विधाय, प्रचुराणि रजत-स्वर्ण-रत्न-गवादीनां दानानि सम्पाद्य, तर्पण-श्राद्धकर्माणि विधिवन्नि-ष्पाद्य, तत्रस्थानां निखिलानां दैवतानां दर्शनपूजनप्रभृतीनि सुसम्पाद्य, मुक्तिमण्डपं समधिगम्य, सायंकालिकीं महापूजां विधाय, नृत्यगीतवाद्यादिभिः समं निशाजागरणं कृत्य, प्रातश्च स्नान-सन्ध्या-तर्पण-श्राद्ध-पिण्डदान-दानादिकर्माण्यनुतिष्ठन्तौ सत्पात्रान् विकलाङ्गान्दरिद्रानन्धादींश्च प्रकामं द्रव्यवितरणं विदधन्तौ पारणानुष्ठानमन्वति-ष्ठताम् । एवं च तौ कालं नयतः स्म, तौ सर्वविधव्रतोपवासाश्च समपादयताम् ।

एकदा पूर्वोक्तपुण्याचरणादिवशाज्ज्ञानवाप्या महिम्नश्चैका घटना घटिता । प्रातर्यावत्तौ ज्ञानवाप्यां स्नात्वा यावद्-बहिरागत्योपविष्टवन्तौ तावत्कश्चिज्जटिलः समागत्य तयोर्हस्तयोर्विभूतिं दत्वा प्रसन्नमुखेन तौ प्रत्याशीरुक्त्वा समाज्ञापयत् महाश्रृङ्गारकरणाय—

उवाच च प्रसन्नास्य आशीर्भिरभिनन्द्य च ।
उत्तिष्ठतं प्रकुरुतं महानेपथ्यमद्य वै ॥

तारकोदयसम्प्राप्तिर्भवित्री वां क्षणादिह ।
यावदित्थं समाचष्ट जटिलोऽग्रे तयोर्वचः ॥

तावद्विमानमापन्नं सक्वणत्किङ्किणीगणम् ।
पश्यतां सर्वलोकानां चन्द्रमौलिरथो रथात् ॥

उत्तीर्य तच्छ्रुतिपुटे किमपि स्वयमादिशत् ।
अनाख्यं तत्परं ज्योतिरुच्चक्राम च तत्क्षणात् ॥

उद्द्योतयन्नभोवर्त्म देवोऽपि स्वालयं ययौ ॥

स्कन्द उवाच—

तदा प्रभृति लोकेऽत्र ज्ञानवापी विशिष्यते ॥
सर्वेभ्यस्तीर्थमुख्येभ्यः प्रत्यक्षज्ञानदा मुने ।
सर्वज्ञानमयी चैषा सर्वलिङ्गमयी शुभा ॥
साक्षाच्छिवमयी मूर्त्तिर्ज्ञानकृज्ज्ञानवापिका ।
सन्ति तीर्थान्यनेकानि सद्यः शुचिकराण्यपि ॥
परन्तु ज्ञानवाप्या हि कलां नार्हन्ति षोडशीम्[1] ॥
( का० ख० ३४।११८-१२५ )

इत्थं च मुक्तिदा ज्ञानवापिका सर्वेषां जन्तूनां परमकल्याणकारिण्यभवत् ।

## पञ्चत्रिंशाध्यायपर्यालोचनम्—

अस्याध्यायस्य नाम यद्यपि काशी-प्रापक-ब्राह्मणसदाचारवर्णनमित्यभिधीयते, तथापि मुख्यतोऽत्र ब्राह्मणदिनचर्यावर्णनं वर्त्तते, प्रसङ्गतश्च द्विजमात्रस्य किं बहुना, सनातनधर्मीयस्य सुप्तोत्थानकालादारभ्य रात्रौ सुषुप्तिकालपर्यन्तं यया दिनचर्यया आचरितव्यम्, तस्याः संक्षिप्तं सुष्ठु वर्णनं विहितम् । तच्च वाराणसीमाहात्म्यम्—

अविमुक्तं महाक्षेत्रं परं निर्वाणकारणम् ।
क्षेत्राणां परमं क्षेत्रं मङ्गलानाञ्च मङ्गलम् ॥
श्मशानानां च सर्वेषां श्मशानं परमं महत् ।
पीठानां परमं पीठमूषराणां महोषणम् ॥
धर्माऽभिलाषिबुद्धीनां धर्मराशिकरं परम् ।
अर्थार्थिनां शिखिरथ परमार्थप्रकाशकम् ॥
( तत्रैव—३५।१-३ )

---

१. पहले मैंने यह बताने की चेष्टा की है कि प्राचीन विश्वनाथ का मन्दिर वर्तमान आदिविश्वेश्वर के मंदिर के पास था । अब वहीं पर सम्भवतः मस्जिद है । दूसरा मन्दिर औरङ्गजेब ने तोड़ा, जिसका पार्श्वभाग या पृष्ठ-भाग आज भी ज्ञानवापी मस्जिद के पीछे पड़ा हुआ आँसू बहा रहा है ।

वर्तमान ज्ञानवापी वाली सड़क ( ज्ञानवापी और विश्वनाथ गली जानेवाले मार्ग ) के दक्षिण जो सीढ़ियाँ है, वे सम्भवतः 'ज्ञानवापी' विशाल सरोवर में जाने के मार्ग की अवशेष हैं । कहा जाता है कि औरङ्गजेब ने जब विश्वनाथ मन्दिर तोड़वाया, तब विश्वनाथ जी आत्मरक्षार्थ तन्नामक कूप में कूद गये । सम्भवतः पुजारियों या भक्तों ने सुरक्षा की दृष्टि से उस कूप में तत्कालीन शिवलिङ्ग को छिपा दिया, जिसमें मज्जित होने से रक्षित रहे । इस प्रकार ज्ञानवापी अब संकुचित होकर 'ज्ञान-कूप' मात्र अवशिष्ट है ।

अग्रेऽपि—

कियन्ति सन्ति तीर्थानि नेह क्षोणीतलेऽखिले।
परं काशी रजोमात्रतुलासाम्यं क्व तेष्वपि ॥
कियन्त्यो न स्रवन्त्योऽत्र रत्नाकरमुदावहाः।
परं स्वर्गतरङ्गिण्याः काश्यां का साम्यमुद्वहेत् ॥
कियन्ति सन्ति नो भूम्यां मोक्षक्षेत्राणि षण्मुख।
परं मन्येऽविमुक्तस्य कोटचंशोऽपि न तेष्वहो ॥

( का० ख० ३५।७-९ )

यतस्तत्र विश्वेश्वरः, गङ्गा, काशी—त्रितयं जागर्ति, अतोऽत्र नैःश्रेयसीलक्ष्मीर्लभ्यते। नात्र सन्देहलेशः। कथं वैषा त्रयी नरस्य सुलभेति प्रश्नोत्तरप्रसङ्गेनैव नरैः का दिनचर्याऽऽचरणीया, के च सदाचारा अनुष्ठेया इति प्रश्ने उपस्थापिते, उत्तरवर्णनमुखेन पुराणकारो वदति। यतो हि नरेण विशेषतश्च द्विजेनाचारशालिना भाव्यम्। यतो हि शास्त्रविचक्षणा नूनं सदाचारं धर्ममूलं वदन्ति। अस्मिन् प्रकरणे बहवो सिद्धान्ताः, ये पथप्रदर्शकास्तेऽपि सूचिताः—

विद्वेषरागरहिता अनुतिष्ठन्ति यं मुने।
विद्वांसस्तं सदाचारं धर्ममूलं विदुर्बुधाः॥
लक्षणैः परिहीनोऽपि सम्यगाचारतत्परः।
श्रद्धालुरनसूयश्च नरो जीवेत् समाः शतम् ॥ (तत्रैव—३५।२५-२६)

सदाचारस्य महान् महिमाऽनेकैः पद्यैरिह कीर्तितः। सदाचारस्य स्वरूपं चापि प्रोक्तम्। इत्थमेव चात्र त्रिंशे श्लोके प्रोक्तम्—

यस्मिन् कर्मण्यन्तरात्मा क्रियमाणे प्रसीदति।
तदेव कर्म कर्त्तव्यं विपरीतं न च क्वचित्[1] ॥ (तत्रैव—३५।३०)

---

१. एतदत्र विशेषेण सूचितं यत्सदाचारजनितो धर्म एव मनुजस्य सहायकः। यतो हि—

"धर्म एव सहायी स्यादमुत्र न परिच्छदः।
पितृमातृसुतभ्रातृयोषिद्बन्धुजनादिकः ॥
जायते चैकलः प्राणी प्रम्रियेत तथैकलः।
एकलः सुकृतं भुङ्क्ते भुङ्क्ते दुष्कृतमेकलः ॥
देहं पञ्चत्वमापन्नं त्यक्त्वा कौ काष्ठलोष्ठवत्।
बान्धवा विमुखा यान्ति धर्मो यान्तमनुव्रजेत् ॥
कृती संचिनुयाद्धर्मं ततोऽमुत्र सहायिनम्।
धर्मं सहायिनं लब्ध्वा सन्तरेद् दुस्तरं तमः" ॥

( का० ख० ३५।३६–३९ )

श्लोके श्लोके चेह सदाचाराचरणस्य बीजं स्वरूपं फलं च श्रुति-स्मृत्यानुमोदितं समुपदिष्टम् । तदनु निगदितं यदनध्यायिनः सदाचारविलङ्घिनः सालसस्य, दुरन्नभोजिनोऽन्तिमे कालेऽन्तकबाधाऽवश्यंभाविनो । सदाचारवर्णनस्योपक्रमे सूचितं यद्रजनीप्रान्तयामार्द्धं ब्राह्मवेलेत्युच्यते । तदैवाचारशीलैरुत्थातव्यम् । तदनन्तरं किं स्मरणीयमिति यदुल्लिखितं तदेव सूचयामि—सर्वतः प्रथमं गजाननः स्मर्त्तव्यस्ततो भवानीभवौ, ततो लक्ष्मीनारायणौ ब्रह्माणीब्रह्माणौ च स्मरितव्यौ। इत्येवं क्रमेण पुरः पङ्क्तिषु निर्दिष्टाः सर्वे क्रमशः स्मरणीयाः—इन्द्रादिसकला देवाः, वसिष्ठादयो मुनयः, गङ्गादिसरितः, श्रीशैलादिगिरयः, क्षीरोदादिसागराः, मानसादिसरोवराः, नन्दनाद्युपवनानि, कामधेनुप्रभृतयो धेनवः, कल्पवृक्षादयस्तरवः, सुवर्णादिधातवः, उर्वश्यादिदिव्याङ्गनाः, गरुडादिपक्षिणः, शेषनागादिसर्पाः, ऐरावतादिगणाः, उच्चैःश्रवसादयोऽश्वाः, कौस्तुभादयो मणयः, अरुन्धत्यादयः पतिपरायणाः साध्व्यः, नैमिषादीनि वनानि, काश्यादिपुर्यः, विश्वेश्वरादिलिङ्गानि, चत्वारो वेदाः, गायत्र्यादिमन्त्राः, नारदादयो वैष्णवाः, प्रणवादिमहाबीजानि, शिवभक्ता बाणासुरादयः, दृढव्रताः प्रह्लादादयः, वदान्या दधीचादयो दातारः, हरिश्चन्द्रादयो भूमिपालाः ।

ततश्च सर्वतीर्थोत्तमोत्तमौ मातृचरणौ वन्दनीयौ । पितरं गुरुं चापि ध्यायं ध्यायं प्रातःकृत्यानि दिनचर्यानुष्ठानं च विधेयम् । अत्र स्मरणीयानां सूचिकाध्ययनेन विज्ञाप्यते यद्भारतीयायां संस्कृत्यां कीदृशी विशालाऽऽधमर्ण्यानुभूतिः । एतच्च तर्पणविधाने सर्वतः प्रथमं तर्पणीयानां सूची अपि ज्ञापयति ।

एतदनन्तरं विस्तृतेऽस्मिन्नध्याये दिनचर्याविधानं विस्तरेण समुपदिष्टम् । यद्यपि समाप्तावध्यायस्यैतत्सूत्र-श्रुति-स्मृत्याद्यनुसारिणी दिनचर्या संक्षिप्तरूपेण निगदितेति सूच्यते । मयात्रत्यं प्रकरणं विस्तरभयादत्र साकल्येन न लिखितम् । सदाचारशीलैः सा दिनचर्या मूलत एव मननीया । एतदप्यत्रावधेयं यदस्मिन्नध्याये या दिनचर्या यच्च नित्याचरणीयमनुष्ठानं समुपात्तं तत्र ब्राह्मण-क्षत्रिय-वैश्यानां कृते तत्सर्वं नैकरूपमुत नूनं तेषां कृते तत्सर्वं पृथक्-पृथङ् निर्दिष्टम् । तथैव महिलानां कृतेऽपि भिन्नमेव । एवमेव ब्रह्मचारि-गृहस्थ-वानप्रस्थ-यतीनां चापि दिनचर्या भिन्ना । वृद्धातुरबालैश्च यो दिनाचार आचरितव्यः, सोऽपि सूचितः । वैदिकानां मन्त्राणां तेषु तेष्वनुष्ठानेषु सन्ध्योपासने च येषां येषां पाठः कार्यः, सोऽप्युपदिष्टः । प्राणायामानुष्ठाने पूरक-कुम्भक-रेचकानां साधना कथं विधेयेत्यपि सुस्पष्टं विज्ञापितम् । प्राणायामस्य यः परिणामो यच्च फलं तन्निखिलं सकलं संसूचितम् । स्नानानां प्रकारा यथा—जलस्नानाग्नेयस्नान-गोरजस्नानेन्द्रस्नान-मन्त्रस्नान-मानसिकस्नान-ब्राह्मस्नानादीनि सुष्ठु विज्ञापितानि । एतेषु ब्राह्मस्नानं प्रशस्तम् । प्राणायामानुष्ठानस्य संख्यानुसारीणि फलानि प्रोक्तानि । सूर्यार्घ्यप्रदानस्य

गायत्रीमन्त्रस्य च महिमानौ विशेषतो निगदितौ मुख्यरूपेण च मननीयौ तदनुरूपं चाचरणीयौ। ब्रह्मचारिणो गृहस्थाश्च निखिलं तद्विज्ञाय तदनुसारं कुर्युः। विधिविधानजुष्टं सर्वमेतदनुष्ठेयम्। प्राणायामप्रणवयोरपि महिमा निर्दिष्टः—

प्रणवेन ततो विप्रो महाव्याहृतिभिस्ततः॥
आत्मानं पावयेद्विद्वान् गायत्र्या च ततः कृती।
( का० ख० ३५।१०४-१०५ )

पुनरप्यन्यत्रोच्यते—

सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश।
अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः॥
यथा पार्थिवधातूनां दह्यन्ते धमनान्मलाः।
तथेन्द्रियैः कृता दोषा ज्वाल्यन्ते प्राणसंयमात्॥
एकं सम्भोज्य विधिवद् ब्राह्मणं यत्फलं लभेत्।
प्राणायामैर्द्वादशभिस्तत्फलं श्रद्धयाऽऽप्यते॥
वेदादिवाङ्मयं सर्वं प्रणवे यत्प्रतिष्ठितम्।
ततः प्रणवमभ्यस्येद् वेदादिं वेदजापकः[1]॥
( का० ख० ३५।११८-१२१ )

गायत्रीमन्त्रजपस्य महिम्ना सहितं प्रातर्मध्याह्नसायाह्नभेदेन गायत्र्या देव्या भिन्नानि ध्यानान्यपि निर्दिष्टानि। नित्यं च तेन पितृतर्पण-बलिवैश्वदेव-पञ्चमहायज्ञातिथिसत्कारादिविधानं भिक्षुक-दरिद्रादिधनान्नदानादिकं च यथाविधि सम्पादनीयम्।

## षट्त्रिंशाध्यायपर्यालोचनम्—

### ब्रह्मचारि-सदाचारवर्णनम्

पूर्वस्मिन्नध्याये दिनचर्यानिरूपणप्रसङ्गेन संक्षेपतः सामान्यतोऽनुष्ठेयाचाराणां निरूपणं पुराणकारो व्यदधात्। तत्र वर्णानुरूपाश्रमसदाचारवर्णनमुखेन सर्वतः प्रथमं क्रमप्राप्तस्य प्रथमाश्रमस्थस्य ब्रह्मचारिणः सदाचारा वर्ण्यन्ते। तत्रादौ श्लोकौ—

---

१. विस्तृतोऽयं सन्दर्भः काशीखण्डस्य पञ्चत्रिंशेऽध्याये 'रामानन्दी'-संस्कृत-टीकया सहाध्येयः। ब्राह्मणगृहस्थानां कृतेऽध्यायस्य प्रकरणानि मननीयान्यध्येयानि च।

ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजाः स्मृताः ।
प्रथमं मातृतो जाताद् द्वितीयं चोपनायनात् ॥
एषां क्रिया निषेकादिश्मशानान्ता च वैदिकी ।
आदधीत सुधीर्गर्भमृतौ मूलं मघां त्यजेत् ॥
( का० ख० ३६।२-३ )

यथा चोक्तम्—'जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते' इति, तदेवात्रापि सूचितम्। आदौ च गर्भाधान-पुंसवन-सीमन्तोन्नयन-नामकरण-बहिर्निष्क्रमणान्नप्राशन-चूडाकर्माख्याः संस्कारा द्विजबालकानां समन्त्रा विधीयन्ते, बालिकानां चामन्त्रकाः। बालिकानां प्रथमः समन्त्रः संस्कारो विवाहः परिणयः कन्यादानप्रमुखः ।

उपनयनसंस्कारो यज्ञोपवीतधारणविधिर्वा निर्धारित-समयसीम्नि विधेयः। बालस्य ब्रह्मवर्चस्वकामो ब्राह्मणो विप्रवटोः पञ्चमे षष्ठे वाब्दे उपनयनं विदधीत। अन्यथाऽष्टमे वर्षेऽवश्यमेव स संस्कारो विधेयः। अष्टमाब्दात् षोडशाब्दपर्यन्तं यदि ब्राह्मणबालकस्य यज्ञोपवीतं न भवेत्, तदा स व्रात्यो भवति । व्रात्यस्तोमयजनेन द्विजत्वं लभते। इत्थमेवैकादशाब्दाद् द्वाविंशवर्षपर्यन्तं क्षत्रियबालः संस्कारहीनः। सोऽपि व्रात्यो भवति। वैश्यबालकश्च द्वादशाब्दाच्चतुर्विंशवर्षं यावदसंस्कृतो व्रात्यो जायते। द्वावपि व्रात्यस्तोमशुद्धिमपेक्षेते । यथा च काशीखण्डकारोऽब्रवीत्—

औपनायनिकः कालो ब्रह्मक्षत्रविशां परः ।
आ षोडशाद्द्वाविंशादाचतुर्विंशदब्दतः ॥
इतोऽप्यूर्ध्वं न संस्कार्याः पतिता धर्मवर्जिताः ।
व्रात्यस्तोमेन यज्ञेन तत्पातित्यं परिव्रजेत् ॥ ( तत्रैव—३६।२२-२३)

उपनीय च तं वटुं ब्रह्मचारिणं शिष्यं महाव्याहृतिपूर्वकं वेदमध्यापयेद्गुरुः। ततश्चापि पूर्वं यथानियमं ब्रह्मचारिणः कृते शौचाचारानुकूलां दिनचर्यां गुरुः शिक्षयेत्। यथा मनुस्मृतौ—"उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः"। द्विजोऽनाश्रमी दिनैकमपि न तिष्ठेत्। ब्राह्मण-क्षत्रिय-वणिजां कृते यथा भिन्नानि मेखला-दण्डाजिनादीनि निर्दिष्टानि, तथैव तत्तद्वर्णजास्ते ब्रह्मचारिणो धारयेयुः। ब्रह्मचारिणोऽपि द्वौ भेदौ भवतः—(१) उपकुर्वाणकः, (२) नैष्ठिकः। प्रथमस्तु शिक्षां समाप्य ऊर्ध्वस्नातो ब्रह्मचारी जटिलो जटादीनि विहाय गोदानविध्यनन्तरं स्नातकः सन् गृहस्थाश्रमं विशेत्, गृहस्थाश्रमधर्मान् विवाहादींश्च पालयेत्—

यावद्वेदमधीते च चरन् वेदव्रतानि च ।
ब्रह्मचारी भवेत्तावदूर्ध्वं स्नातो गृही भवेत् ॥ ( तत्रैव—३६।३२ )

नैष्ठिकश्च ब्रह्मचारी ब्रह्मचर्यव्रतमाजीवनं धारयन् गुरुकुलमेव वसेत्। भिक्षाचरणेऽपि विप्रक्षत्रविशां भिक्षायाचनसम्बोधनान्यपि भिन्नानि भिन्नानि, यथाक्रमं च तानि—(१) भवति भिक्षां देहि, (२) भिक्षां भवति देहि, (३) भिक्षां देहि भवतीति। भिक्षाचरणं च सामान्यतो नैकगृहात्। अत्रापि बहवो नियमास्ते मूल एव द्रष्टव्याः। आश्रमाणां ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-संन्यासाख्यानामपि महत्त्व विद्यते।

एतत्पूर्वम् उपवीतविषयेऽपि विधिर्वर्णितोऽस्ति—

उपवीतं क्रमेण स्यात् कार्पासं शाणमाविकम्।
त्रिवृदूर्ध्ववृतं तच्च भवेदायुर्विवृद्धये ॥ (तत्रैव—३६।२७)

कस्यां परिस्थित्यां कमण्डलु-दण्डोपवीतप्रभृतीनि त्याज्यानि, केन विधिना च नवीनानि धारणीयानीति सर्वं सुस्पष्टं समुपदिष्टम्। एतदपि समाज्ञप्तं यत्--

वेदारम्भे विसर्गे च विदध्यात्प्रणवं सदा।
अफलोऽनोङ्कृतो यस्मात्पठितोऽपि न सिद्धये॥
( तत्रैव—३६।४२ )

अपि च—

वेदस्य वदनं प्रोक्तं गायत्री त्रिपदा परा।
तिसृभिः प्रणवाद्याभिर्महाव्याहृतिभिः सह ॥ ( तत्रैव—३६।४३ )

अग्रेऽपि च गायत्रीमन्त्रस्वरूपमधिकृत्य काशीखण्डकारो ब्रूते—

त्रिवर्णमयमोङ्कारं भूर्भुवः स्वरिति त्रयम्।
पादत्रयं च सावित्र्यास्त्रयो वेदा अदूदुहन्॥ (तत्रैव—३६।४६ )

अस्मिन्प्रसङ्गे गायत्रीमन्त्रजपसंख्यादिविषयेऽन्यस्मिँश्च सम्पृक्तविषये गायत्रीमन्त्र-जपफलादीनि विधानानि सुस्पष्टमुक्तानीति मूलत एवानुगन्तव्यम्। आचार्य-उपाध्याय-गुरुविषयेऽपारिभाषिकी सूचना तत्रोट्टङ्किता। यथा हि—

उपनीय च वै शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं विदुर्बुधाः॥

योऽध्यापयेदेकदेशं श्रुतेरङ्गान्यथाऽपि वा।
वृत्त्यर्थं स उपाध्यायो विद्वद्भिः परिगीयते॥

यथाविधि निषेकादि यः कर्म कुरुते द्विजः।
सम्भावयेत्तथाऽन्नेन गुरुः स इह कीर्त्यते॥
( तत्रैव— ३६।५३-५५ )

अग्रेऽपि ऋत्विगादीनां तारतम्यवर्णनं यथा—

अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते॥
उपाध्यायाद्दशाचार्य आचार्यात्तु शतं पिता।
सहस्रन्तु पितुर्माता गौरवेणातिरिच्यते॥
(का० ख० ३६।५६-५७)

अभिवादनविषये ब्रह्मचर्यदृष्ट्या युवतीनां गुरुपत्नीनां स्पर्शपूर्वकं चरणाभिवन्दनं निषिद्धम्—

नाभिवाद्या गुरोः पत्नी स्पृष्ट्वांघ्री युवती सती। इत्यादि।
(तत्रैव—३६।६६)

इत्थमेव च—

न मात्रा न दुहित्रा वा न स्वस्त्रैकान्तशीलता।
बलवन्तीन्द्रियाण्यत्र मोहयन्त्यपि कोविदान्[1]॥
(तत्रैव—३६।६९)

अस्मिन्नेवाध्यायावसानश्लोकेषु ब्रह्मचर्यसमाप्तौ अविप्लुतब्रह्मचर्येण ब्रह्मचारिणा सर्वेषामाश्रमाणामुपजीवको गृहस्थाश्रमो प्रवेश्य इति उपक्रमन्नाह—

अधीत्य वेदान् वेदौ वा वेदं वाऽपि क्रमाद्द्विजः।
अप्रस्खलद्ब्रह्मचर्यो गृहाश्रममथाश्रयेत्॥
(तत्रैव—३६।७८)

अधस्ताच्चाध्यायेऽस्मिन् यो गृहस्थाश्रममहिमा गीयते स्म, स मूलत एव मननीयो विस्तरेण। अप्रस्खलद्ब्रह्मचर्या नूनं विश्वेश्वरानुग्रहेण लभ्यस्तथैव च विश्वेश्वरानुग्रहो नाम काशीलाभकरः स्मृतः। काशीप्राप्त्या च ज्ञानं भवति, ततश्च तज्ज्ञानं निर्वाणमृच्छति।

अस्य षट्त्रिंशाध्यायस्यान्तिमेषु श्लोकेषु प्रथमाश्रमसमाप्तौ कैः कैः गुणैर्विशिष्टा कन्या पाणिग्रहणयोग्येति सूचयन्नाह काशीखण्डकारः—प्रथमं गृहस्थाश्रमश्रेष्ठत्वं ततश्च कन्यागुणाः—

---

१. तुलनीयो मनुस्मृतिश्लोकः—

"मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति"॥ (मनु० २।२१५)

गृहाश्रमात् परं नास्ति यदि पत्नी वशंवदा।
आनुकूल्यं हि दम्पत्योस्त्रिवर्गोदयहेतवे ॥
आनुकूल्यं कलत्रं चेत्त्रिदिवेनापि किं ततः।
प्रातिकूल्यं कलत्रं चेन्नरकेणापि किं ततः ॥
गृहाश्रमः सुखार्थाय भार्यामूलं च तत्सुखम्।
सा च भार्या विनीता या त्रिवर्गो विनयो ध्रुवम् ॥
जलौकयोपमीयन्ते प्रमदा मन्दबुद्धिभिः।
मृगीदृशां जलौकानां विचारान्महदन्तरम् ॥
जलौका केवलं रक्तमाददाना तपस्विनी।
प्रमदा सर्वदा दत्ते चित्तं वित्तं बलं सुखम् ॥
दक्षा प्रजावती साध्वी प्रियवाक् च वशंवदा।
गुरोरमीभिः संयुक्ता सा श्रीः स्त्रीरूपधारिणी ॥

(का० ख० ३६।८२–८७)

एतैर्गुणगणैरुपेता कन्या स्नातकेनोद्वहनीया। अपि च पुराणकारोऽत्र शास्त्रवचांसि किलोपदिशति—

गुरोरनुज्ञया स्नात्वा व्रतं वेदं समाप्य च।
उद्वहेत ततो भार्यां सवर्णां साधुलक्षणाम् ॥
जनेतुरसगोत्रा या मातुर्याप्यसपिण्डका।
दारकर्मणि योग्या सा द्विजानां धर्मवृद्धये ॥

( तत्रैव—३६।८८–८९)

इत्थमेव च मनुस्मृतावपि—"असपिण्डा च या मातुरसगोत्रा च या पितुः" इत्यादि। अग्रे च—"सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि"। इत्यादि।

स्त्रीसम्बन्धेऽप्यपस्मारि-क्षयि-श्वित्रि-कुलं त्यजेत्।
अभिशस्तिसमायुक्तं तथा कन्याप्रसूं त्यजेत् ॥
रोगहीनां भ्रातृमतीं स्वस्मात् किञ्चिल्लघीयसीम्।
उद्वहेत द्विजो भार्यां सौम्यास्यां मृदुभाषिणीम् ॥

( तत्रैव—३६।९०–९१ )

**सप्तत्रिंशाध्यायपर्यालोचनम्—**

**स्त्रीलक्षणानि सामुद्रिकशास्त्रीयानि**

तत्रादौ केचन लक्षणसिद्धान्तपरं स्त्रियो महत्त्वं संसूचितम्—

**सदा गृही सुखं भुङ्क्ते स्त्री लक्षणवती यदि ।**
**अतः समृद्धचर्थमादौ लक्षणमीक्षयेत् ॥** (का० ख० ३७।१)

एतदेवाभिप्रेत्यामुष्मिन्नध्याये स्त्रीणां शुभाशुभफलदायकलक्षणानि परिगृहीतानि। यतः सुखसमृद्धचर्थं स्त्री यस्य सुलक्षणा स गृहस्थो सुखं भुङ्क्ते, अतः सर्वत प्रथमं स्त्रीणां लक्षणानां परिवीक्षणं कर्त्तव्यमिति कृत्वा तासां शुभाशुभलक्षणस्थानानि सामुद्रिकशास्त्रानुसारीणि सर्वतः पुरतोऽमुष्मिन्नध्याये सूच्यन्ते—

**वपुरावर्तगन्धाश्च छाया सत्त्वं स्वरो गतिः ।**
**वर्णश्चेत्यष्टधा प्रोक्ता बुधैर्लक्षणभूमिका ॥** ( तत्रैव—३७।२ )

ततोऽग्रे वपुषां लक्षणानां मुख्यतमत्वेन तानि नूनं किञ्चिद्विस्तरेणेह वर्णितानि—

**आपादतलमारभ्य यावन्मौलिरुहं क्रमात् ।**
**शुभाऽशुभानि वक्ष्यामि लक्षणानि मुने शृणु ॥** ( तत्रैव—३७।३ )

एवमुपक्रम्य पादतलादारभ्य शिरोरुहपर्यन्तं वपुषो शुभाशुभलक्षणानि प्रोक्तानि। मध्ये मध्ये यत्र तत्र रोमराजीनामावर्त्तानां तिलकादीनां रेखानामन्यरेखाचिह्नानां शुभाशुभफलदानां वर्णनं विहितम् । यथात्रोदाहरणम्—

**व्यक्तस्वस्तिकरेखं च ललाटं राज्यसम्पदे ।** ( तत्रैव—३७।११९ )

पुनरपि—

**तिलकं लाञ्छनं वाऽपि हृदि सौभाग्यकारणम् ।**
**यस्या दक्षिणवक्षोजे शोणे तिलकलाञ्छने ॥**
**कन्याचतुष्टयं सूते सूते सा च सुतत्रयम् ।**
( तत्रैव—३७।१२६-१२७ )

एतेनैव क्रमेण स्वप्ने प्रलापकारिणीनां कठोरस्वरवतीनां मृदुलापकर्तॄणां शुभाशुभफलदातॄणां वपुरावर्तादिलक्षणानां द्विचत्वारिंशश्लोकपर्यन्तं लक्षणवृत्तं विधायाग्रे ब्रूते पुराणकृत्—

सुलक्षणाऽपि दुःशीला कुलक्षणाशिरोमणिः ।
अलक्षणाऽपि सा साध्वी सर्वलक्षणभूस्तु सा ॥

सुलक्षणा सुचरित्रा स्वाधीना पतिदेवता ।
विश्वेशाऽनुग्रहादेव गृहे योषिदवाप्यते ॥

अलङ्कृता स्ववासिन्यो याभिः प्राक्तनजन्मनि ।
नानाविधैरलङ्कारैस्ताः स्वरूपा भवन्ति हि ॥

(का० ख० ३७।१४३-१४५)

पूर्वजन्मनि किं किमाचरणेन कीदृशी गृहिण्यो जायन्त इति प्रोच्य अन्ते द्वाभ्यां सूच्यते—

स्वाधीनपतिकानां च सुशीलानां मृगीदृशाम् ।
स्वर्गापवर्गावत्रैव सुलक्षणफलं हि तत् ॥

सुलक्षणैः सुचरितैरपि मन्दायुषं पतिम् ।
दीर्घायुषं प्रकुर्वन्ति प्रमदाः प्रमदास्पदम् ॥

( तत्रैव—३७।१४८-१४९ )

अष्टत्रिंशाध्यायपर्यालोचनम्—

पूर्वाध्याये उद्वाह्यानां कन्यानां शुभाशुभलक्षणानि विविच्याधुना गृहस्थाश्रमधर्मवर्णनात्पूर्वमष्टविधविवाहानां प्रकाराः प्रोच्यन्ते—

विवाहा ब्राह्मदैवार्षाः प्राजापत्यासुरौ तथा ।
गान्धर्वो राक्षसश्चापि पैशाचोऽष्टम उच्यते ॥ ( तत्रैव—३८।१ )

तेष्वष्टविधविवाहेषु ब्राह्मो नूनं सर्वश्रेष्ठः । सुष्ठ्वलङ्कृता कन्या वराय ब्राह्मविवाहविधिना यदा दीयते सा कन्या यं पुत्रं सूते, स तनय एकविंशतिपुरुषान् पुनाति । एष ब्राह्मो विवाहः । यज्ञकर्मस्थिताय ऋत्विजे दैवविवाहविधिना या पुत्री वराय दीयते, तस्याः पुत्रश्चतुर्दशपुरुषान् पुनाति । वरादेकं (द्वे वा) गोयुग्ममादायार्षविधिना कृतेन कन्यादानेन प्रसूतस्तनुजः षट् पुरुषान् समुद्धरति । प्राजापत्यविवाहविधानानुसारेण "युवां सहधर्मचारिणौ भवतामि"त्युक्त्वा कन्यां प्रदाय वराय या परिणीयते, तस्याः पुत्रोऽपि षट् पुरुषान् पुनाति । इमानि चत्वारि ब्राह्म-दैवार्ष-प्राजापत्यविध्यनुसारि कन्यादानविधानानि ब्राह्मणैर्ग्राह्याण्युत्तमानि च ।

गान्धर्वासुरराक्षसविवाहाः क्षत्रियवैश्ययोः कृते ग्राह्याः, यद्यपि न प्रशस्ताः। अष्टमश्च पैशाचः पापिष्ठो विवाहः। अन्योन्यमैत्रीभावतो जातो विवाहो गान्धर्वः। यथाह मनुः—"इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः" ॥ इति। धनेन कन्यां क्रीत्वा कृतो विवाह आसुरः। प्रसह्य कन्याहरणाच्च कृतो विवाहो राक्षसः। सोऽपि गर्हितः। यत्र छलेन कन्याहरणं विधाय बलात्कन्या परिणीयते, स निन्दिततमः पैशाचो विवाहः। यथा च—

आसुरः क्रयणाद्द्रव्यैर्गान्धर्वोऽन्योन्यमैत्रतः॥

प्रसह्य कन्याहरणाद्राक्षसो निन्दितः सताम्।
छलेन कन्याहरणात्पैशाचो गर्हितोऽष्टमः॥

प्रायः क्षत्रविशोरुक्ता गान्धर्वासुरराक्षसाः।
अष्टमस्त्वेष पापिष्ठः पापिष्ठानां च सम्भवेत् ॥ (का०ख० ३८।५-७)

तत्पश्चाच्चास्मिन्नध्याये मन्वादिस्मृतिमनुस्मरता विवाहस्य सन्दर्भे, विवाहसम्बन्धिप्रसङ्गेऽन्यस्मिंश्च सम्पृक्तपक्षेषु बहूनि करणीयान्याचरणीयान्यनुष्ठानानि किञ्चिद्विवरणपूर्वकं वर्णितानि। पत्नीसहवासकालो निषिद्धतिथ्यादि समः पक्षोऽपि संक्षेपतो निर्दिष्टः। अथ चात्र किं शस्तं किमशस्तमित्यपि प्रोक्तवान् पुराणे। आर्षविवाहे वराद् गोयुग्मग्रहणं तदपि न शस्तम्। यतो हि कन्याया अणुमात्रमपि शुल्कं वरपक्षाद् ग्रहणमप्रशंसनीयम्। तेन कन्यापक्षः कन्याविक्रयी भवति। कन्याविक्रयणं ब्रह्मातीव गर्हितम्। कन्याविक्रयी पापभाग् भवति। स्त्रीधनग्रहणमपि तथैव पापदम्—

स्त्रीधनान्युपजीवन्ति ये मोहादिह बान्धवाः।
न केवलं निरयगास्तेषामपि हि पूर्वजाः॥
(तत्रैव—३८।१९)

गृहस्थाश्रमस्य सुष्ठुरूपं पतिपत्न्योः परस्परं सन्तोषभावः। यथा—

पत्या तुष्यति यत्र स्त्री तुष्येद्यत्र स्त्रिया पतिः।
तत्र तुष्टा महालक्ष्मीर्निवसेद्दानवारिणा॥ (तत्रैव—३८।२०)

कुलपतनस्यात्र कारणानि निर्दिशन् प्रोच्यते यद्—वाणिज्यम्, नृपतेः सेवा, वेदानध्ययनम्, कुविवाहः, क्रियालोपश्चात्र हेतवः।

अतो द्विजेन निष्कारणो वेदो नित्यमध्येयः, प्रातः सायं चावश्यमेव (यदि मध्याह्ने न सम्भवेत्) सन्ध्योपासना, सावित्रीमन्त्रस्य (गायत्रीमन्त्रस्य) जपश्च विधेयः। ब्राह्मणैर्नित्यं नित्यकर्माणि करणीयानि। तथा चोक्तम्—

कुर्याद्वैवाहिके वह्नौ गृह्यं कर्मान्वहं गृही ।
पञ्चयज्ञक्रियां चापि पक्तिं दैनन्दिनीमपि ॥

गृहस्थाश्रमिणः पञ्च सूनाकर्म दिने दिने ।
कण्डनी पेषणी चुल्ली ह्युदकुम्भस्तु मार्जनी ॥

तासां च पञ्च सूनानां निराकरणहेतवः[1] ।
क्रतवः पञ्च निर्दिष्टा गृहिश्रेयोऽभिवर्धनाः ॥

पाठनं ब्रह्मयज्ञः स्यात् तर्पणं च पितृक्रतुः ।
होमो दैवो बलिर्भौतोऽतिथ्यर्चा नृक्रतुः क्रमात् ॥

पितृप्रीतिं प्रकुर्वाणः कुर्वीत श्राद्धमन्वहम् ।
अन्नोदकपयोमूलैः फलैर्वापि गृहाश्रमी ॥

गोदानेन च यत्पुण्यं पात्राय विधिपूर्वकम् ।
सत्कृत्य भिक्षवे भिक्षां दत्वा तत्फलमाप्नुयात् ॥

तपोविद्यासमुद्दीप्ते हुतं विप्रास्यपावके ।
तारयेद् विघ्नसंघेभ्यः पापाब्धेरपि दुस्तरात् ॥

अनर्चितोऽतिथिर्गेहाद् भग्नाशो यस्य गच्छति ।
आजन्मसञ्चितात्पुण्यात्क्षणात्स हि बहिर्भवेत् ॥

सान्त्वपूर्वाणि वाक्यानि शय्यार्थे भूस्तृणोदके ।
एतान्यपि प्रदेयानि सदाऽभ्यागततुष्टये ॥

( का० ख० ३८।२२–३० )

एतस्मिन् प्रसङ्गेऽतिथिसत्कारस्य बहु माहात्म्यं वर्णितं वर्त्तते । सर्वं च विधि-विधानमत्र निर्दिष्टमस्ति । एतदनन्तरं वैश्वदेवबलिविधानवर्णनमपि सुस्पष्टं निरूपितम् । अनेन विना ये गृहिणो भोजनं कुर्वन्ति तेषां परिणामोऽपि निगदितः ।

इत्थमेव गृहस्थैराचरणीयानि सकलानि विधानानि वेदपाठनपठनानुष्ठेयानि कर्माण्यपि सूचितानि । किञ्चित्तत्र विशिष्टम् । मुखेनाग्निधमनादीनि निषिध्य अग्रे ब्रूते पुराणकारः —

न संविशेत सन्ध्यायां प्रत्यक्सौम्यशिरा अपि ।
विण्मूत्रष्ठीवनं नाप्सु कुर्याद्दीर्घं जिजीविषुः ॥

नाचक्षीत धयन्तीं गां नेन्द्रचापं प्रदर्शयेत् ।
नैकः सुप्यात् क्वचिच्छून्ये न शयानं प्रबोधयेत् ॥

---

१. पञ्चसूनाकर्मणि या हिंसा भवति, तस्य प्रायश्चित्तहेतुरूपेणेति भावः ।

पन्थानं नैकलो यायान्न वार्यञ्जलिना पिबेत् ।
न दिवोद्धृतसारं च भक्षयेद्दधि नो निशि ॥
स्त्रीधर्मिण्या नाभिवदेन्नाद्यादातृप्ति रात्रिषु ।
तौर्यत्रिकप्रियो न स्यात् कांस्ये पादौ न धावयेत् ॥
श्राद्धं कृत्वा परश्राद्धे योऽश्नीयाज्ज्ञानवर्जितः ।
दातुः श्राद्धफलं नास्ति भोक्ता किल्बिषभुग्भवेत् ॥
न धारयेदन्यभुक्तं वासश्चोपानहावपि ।
नाभिन्नभाजनेऽश्नीयान्नासीताग्न्यादिदूषिते ॥
आरोहणं गवां पृष्ठे प्रेतधूमं सरित्तरम् ।
बालातपं दिवा स्वापं त्यजेद्दीर्घं जिजीविषुः ॥
स्नात्वा न मार्जयेद्गात्रं विसृजेन्न शिखा पथि ।
हस्तौ शिरो न धुनुयान्नाकर्षेदासनं पदा ॥
नोत्पाटयेल्लोमनखं दशनेन कदाचन ।
करजैः करजच्छेदं तृणच्छेदं विवर्जयेत् ॥
शुभाय न यदायत्यां त्यजेत्तत्कर्म यत्नतः ।
अद्वारेण न गन्तव्यं स्ववेश्मपरवेश्मनोः ॥
क्रीडेन्नाक्षैः सहासीत न धर्मघ्नैर्न रोगिभिः ।
न शयीत क्वचिन्नग्नः पाणौ भुञ्जीत नैव च ॥
आर्द्रपादकरास्योऽश्नन् दीर्घकालं च जीवति ।
संविशेन्नार्द्रचरणो नोच्छिष्टः क्वचिदाव्रजेत् ॥
शयनस्थो न चाश्नीयान्न पिबेन्न जपेद् द्विजः ।
सोपानत्कश्च नाचामेन्न तिष्ठन् धारया पिबेत् ॥
सर्वं तिलमयं नाद्यात् सायं शर्माभिलाषुकः ।
न निरीक्षेत विण्मूत्रे नोच्छिष्टः संस्पृशेच्छिरः ॥

(का० ख० ३८।५६–६९)

एतदनन्तरमपि गृहस्थाश्रमवासिभिर्नानुष्ठेयानि बहून्यन्यानि कर्माणि प्रोक्तानि । प्राय इमानि विधानानि सर्वाश्रमवासिभिर्यथायथं पालनीयानि । इदमपि प्रोक्तम्—

अनायुष्यकरं चैव परदारोपसर्पणम् ।
तस्मात्तद्दूरतस्त्याज्यं वैरिणां चोपसेवनम् ॥ (तत्रैव—३८।८१)

इदमप्युपदिष्टम्—

पूर्वाधिभिः परित्यक्तमात्मानं नावमानयेत् ।
सदोद्यमवतां यस्माच्छ्रियो विद्या न दुर्लभाः ॥ (का० ख० ३८।८२)

एतेषु विधानेषु बहूनि स्वास्थ्यरक्षणपराणि दीर्घजीवनकराणि भवन्ति । मन्वादीनां स्मृतिग्रन्थेष्वपि अमूनि प्राय उपदिष्टानि । यथा—

सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मो घटोद्भव ॥ (तत्रैव—३८।८३)

एष नीतिशास्त्रीयो व्यवहारशिक्षक उपदेशः । स्वास्थ्यपरको यथा चरकसंहितायाम्—

१. अथातो दीर्घंजीविताध्यायं व्याख्यास्यामः ।

२. न वेगान् धारयेद्धीमान् ।

काशीखण्डे यथा—

वाचोवेगं मनोवेगं जिह्वावेगं च वर्जयेत् ।
उत्कोचद्यूतदौत्यार्तद्रव्यं दूरात्परित्यजेत् ॥

गोब्राह्मणाग्नीनुच्छिष्टपाणिना नैव संस्पृशेत् ।
न स्पृशेदनिमित्तेन खानि स्वानि त्वनातुरः ॥

गुह्यजान्यपि लोमानि तत्स्पर्शादशुचिर्भवेत् ।
पादधौतोदकं मूत्रमुच्छिष्टान्नोदकानि च ॥

निष्ठीवनं च श्लेष्माणं गृहाद्दूरं विनिक्षिपेत् ॥ (३८।८६-८९)

अत्र अभ्यागतमतिथिं च प्रति कथं वाचा व्यवहरेदित्यादि सर्वाणि समुपदिष्टानि ।

किं वहुनाऽत्रैतावन्मात्रं निवेद्य विरमामि यदिमे धर्मोपदेशाः प्रायशो धर्मजुष्टाः, व्यवहारनीतिशिक्षकाः, जीवनेऽभ्युदयकारकाः, सर्वजनैराचरणीयाः। अस्मिन्नेवाध्याय एतदपि निगदितम्—

गन्धपुष्पकुशान् शय्यां शाकं मांसं पयो दधि ।
मणिमत्स्यगृहं धान्यं ग्राह्यमेतदुपस्थितम् ॥

मधूदकं फलं मूलमेधांस्यभयदक्षिणा ।
अभ्युद्यतानि ग्राह्याणि त्वेतान्यपि निकृष्टतः ॥
( तत्रैव—३८।१०३-१०४ )

यदि अयाचितान्यमूनि वस्तूनि लभ्यन्ते, तदा निकृष्टादपि प्रदत्तानि ग्राह्याणी-त्याशयः। अन्नभोजनसम्बन्धेऽप्यनुपदमेव सूचयता ग्रन्थकारेण निर्दिश्यते—

दास–नापित–गोपाल–कुलमित्रार्धसीरिणः ।
भोज्यान्नाः शूद्रवर्गेऽमी तथात्मविनिवेदकः ॥ (का० ख० ३८।१०५)

दासादिभिः समर्पितं भोज्यान्नं ब्राह्मणगृहस्थैर्ग्राह्यम्, न तत्र कोऽपि दोषः। मनुस्मृतावपि समाननिर्देशात्मकं वचनं लभ्यते।

एतदनन्तरममुष्मिन्नध्याये निगदितं गृहस्थाश्रमधर्मं नित्यकर्म, अग्न्याधान–पञ्चमहायज्ञादिसहितं देवर्षि-पितृजानि ऋणानि सम्यक् सावधानेन चेतसा शोधयन् गेहे निवसन् तदनन्तरं सन्ततिषु सर्वं विसृज्य क्रमशस्तृतीयाश्रमं चतुर्थाश्रमं च प्रविश्याध्यात्मिकानुष्ठानमनुतिष्ठन् ज्ञानं लभमानो मानवो मुक्तिं लभते; परन्त्वेतत्सम्यग्ज्ञानं नैकजन्मना लब्धुं शक्यते।

अपरश्च निर्वाणलाभोपायः काश्याः परिसेवनम्। तदपि न सुकरम्। अनेकजन्मार्जितपुण्यजन्यसदाचारैरविमुक्तेश्वरपुरी वाराणसी लभ्या। तस्या लाभेन तत्र मरणमात्रेणाविमुक्तेश्वरानुकम्पया शिवोपदेशेनानायासेनैव मुक्तिः सुलभेति।

## एकोनचत्वारिंशाध्यायपर्यालोचनम्—

### अविमुक्तेश्वरस्य कथा दिवोदासाख्यानस्योपक्रमश्च

अस्याध्यायस्य प्रथम एव पद्ये षाण्मातुरो ब्रवीति स्म—

शृण्वगस्त्य महाभाग! कथां पापप्रणाशिनीम्।
नैःश्रेयस्याः श्रियोहेतुमविमुक्तसमाश्रयाम् ॥ (तत्रैव—३९।१)

अनेन वर्णनेनाविमुक्तेश्वरस्येह कथोपक्रम्यते। तन्मिषेण च शङ्करस्य शिवाधासस्य वाराणस्या माहात्म्यम्, वाराणस्यां चाविमुक्तेश्वरकथा, अविमुक्तेश्वरपुर्याश्च मुक्तिप्रदत्वम्, नगर्या अस्याः शिवप्रियत्वमादि वर्णितम्। उपर्युक्तसन्दर्भैः सह इक्ष्वाकुवंशोद्भूतस्य रिपुञ्जयस्य दिवोदासापरनामधेयस्याख्यानस्य चास्मिन्नेवाध्याये प्रवेशो भवति। तच्च यथा—

परं ब्रह्म यदाम्नातं निष्प्रपञ्चं निरात्मकम्।
निर्विकल्पं निराकारमव्यक्तं स्थूलसूक्ष्मवत् ॥

तदेतत् क्षेत्रमापूर्य स्थितं सर्वगमप्यहो।
किमन्यत्र न शक्तोऽसौ जन्तून्मोचयितुं भवात् ॥
(तत्रैव—३९।२–३)

अस्या अविमुक्तेश्वरपुर्या मुक्तिप्रदानत्वविषयेऽग्रिमैः षड्भिः पद्यैः किलाम्नातम्—

भवो ध्रुवं यदत्रैव मोचयेत्तं निशामय।
महत्या योगयुक्त्या वा महादानैरकामिकैः॥
सुमहद्भिस्तपोभिर्वा शिवोऽन्यत्र विमोचयेत्।
योगयुक्तिं न महतीं न दानानि महान्ति च॥
न तपांस्यतिदीर्घाणि काश्यां मुक्त्यै शिवोऽर्थयेत्।
वियुनक्ति न यत्काश्या उपसर्गे महत्यपि॥
अयमेव महायोग उपयोगस्त्विहापरः।
नियमेन तु विश्वेशे पुष्पं पत्रं फलं जलम्॥
यद्दत्तं सुमनोवृत्त्या महादानं तदत्र वै।
मुक्तिमण्डपिकायां च क्षणं यत् स्थिरमास्यते॥
स्नात्वा गङ्गाऽमृते शुद्धे तप एतदिहोत्तमम्।
सत्कृत्य भिक्षवे भिक्षा यत्काश्यां परिदीयते॥
तुलापुरुष एतस्याः कलां नार्हति षोडशीम्॥ (का० ख० ४-९)

अस्मिन्नेव प्रसङ्गे यथाऽत्रत्यदान-तपो-धर्माचारादिस्वरूपस्य वैशिष्ट्यं वर्णितं महिमा च विवृतस्तथैव काशीस्थोत्तरवाहिन्या भागीरथ्या माहात्म्यं निगदितम्। तदनन्तरं त्र्यहोरात्रमात्रं वाराणसीनिवासस्याप्यपूर्वं महिमानं सूचितम्।

मासि मासि कुशाग्राम्बुपानादन्यत्र यत्फलम्।
काश्यामुत्तरवाहिन्यामेकेन चुलुकेन तत्॥
अनन्तो महिमा काश्याः कस्तं वर्णयितुं प्रभुः।
विपत्तिमिच्छतो जन्तोर्यत्र कर्णेजपः शिवः॥
शम्भुस्तत्किञ्चिदाचष्टे म्रियमाणस्य जन्मिनः।
कर्णेऽक्षरं यदाकर्ण्य मृतोऽप्यमृततां व्रजेत्॥
स्मारं स्मारं स्मररिपोः पुरीं त्वमिव शङ्करः।
अद्रुनोन्मन्दरं यातो बहुशस्तदवाप्तये॥
(तत्रैव—३९।१७-२०)

एतदनन्तरमगस्त्यः पृच्छति पार्वतीपुत्रं यत्केन कारणेन वाराणसीपुरपतिर्विश्वनाथो वाराणसीं विहाय मन्दराचलं निवसति स्म। परिप्रश्नं च समाकर्ण्य स्कन्दोऽगस्त्यं प्रति दिवोदासाख्यानं किञ्चिद्विस्तरेण विवृतवान्। सोऽब्रवीत्—

मुक्तिमणिराशिरूपायाः काश्या भगवच्छङ्करकृतत्यागस्य हेतुभूतमेकमाख्यानमस्ति। यथा देवानां प्रार्थनावशेन हे अगस्त्य! त्वं काशीं विसृष्टवान्, तथैव सकललोकानां कल्याणकामनावशीभूतो भगवाँच्छङ्करोऽपि हिरण्यगर्भस्य प्रार्थनामादृत्य स्वप्रियतमां पुरीं वाराणसीं विहाय मन्दराचलमगच्छत्।

पाद्मे कल्पे स्वायंभुवमन्वन्तरे पृथिव्यामेकदा षष्टिवर्षात्मिकाऽनावृष्टिरजायत। सर्वत्राराजकताऽभूत्। चौराणामन्यदस्यूनां हिंसकानां सर्वत्रातिचारानाचारौ व्यवर्धताम्। सकललोकानां दुर्गतिं परमां दुर्दशां च दर्शं दर्शं यज्ञ-तपो-दान-धर्माचारादिकर्मणां सर्वत्राभावं श्रावं श्रावमुपायं चिन्तयमानो द्रुहिण इक्ष्वाकुकुलोद्भूतं रिपुञ्जयेति नाम्ना ख्यातं निश्चलेन्द्रियं राजर्षिसत्तममविमुक्तेश्वरक्षेत्रे तपस्यन्तं लोकानां त्राणाय भुवोऽधिपतिरूपेण शासितुमभ्यर्थयाञ्चक्रे। यतो जानाति स्म हिरण्यगर्भो यदेतस्य धर्मपुष्टशासनेन वृष्टिर्भविष्यति सुकालं चागमिष्यति।

परन्तु राजर्षी रिपुञ्जयोऽवादीद्यत्तदैवाहं पृथिवीतलस्य शासनं विधास्यामि, यदा सर्वे देवा भूर्लोकं विहाय स्वर्गं यास्यन्ति[1]। ब्रह्मा 'तथास्त्वि'ति प्रोवाच। एतस्मिन्नेव प्रसङ्गे आत्मभूः शङ्करं प्रार्थयन्नयाचत यत्तेनापि लोकोपकारायानावृष्टिजन्यदुर्भिक्षापाक[illegible]णाय च स्वीया प्रिया पुरी वाराणसी हातव्या। तेन च मन्दराचलमेव निवासो विधातव्यः। कमलासनस्य चतुर्मुखस्य वरदानं विज्ञाय रुद्रो हि दूयमानेन मनसाऽविमुक्तपुरीं किल त्यक्तवान्।

कुशद्वीपादागतं तपस्यन्तं मन्दराचलं प्रति पितामहेन सह फणिभूषणः प्रतस्थे। शिवश्च वृषभारूढः, नन्दिभृङ्गिणौ च पुरतो गच्छतः स्म। तत्र च मन्दरः शम्भोश्चरणयोः पपात वरं चायाचत, याचने चास्मिन्नविमुक्तक्षेत्रस्य स्वीयं साम्यमभिलषति स्म—

ततोऽविमुक्तक्षेत्रस्य साम्यं ह्यभिलषाम्यहम्।
(का० ख० ३९।५८)

---

१. यद्यहं पृथिवीनाथः सर्वलोकपितामह।
तदा दिविषदो देवा दिवि तिष्ठन्तु मा भुवि॥
देवेषु दिवि तिष्ठत्सु मयि तिष्ठति भूतले।
असपत्नेन राज्येन प्रजा सौख्यमवाप्स्यति॥
तथेति विश्वसृक् प्रोक्तो दिवोदासो नरेश्वरः।
पटहं घोषयाञ्चक्रे दिवं देवा व्रजन्त्विति॥
मागच्छन्त्विह वै नागा नराः स्वस्था भवन्त्विति।
मयि प्रशासति क्षोणीं सुराः स्वस्था भवन्त्विति॥ (का० ख० ३९।४६-४९)

उमासहितस्य कुशद्वीपे सपरिच्छदस्य ( सपरिवारस्य ) भवतो निवास आयत्ता भवत्विति वरं याचे ।

एतदेवाभ्यन्तरे स्वावसरं विलोक्य सर्वं रिपुञ्जयदिवोदासप्रसङ्गं निवेद्य, दिवोदासप्रेरणया स्वप्रतिज्ञां दिवोदासाय वरप्रदानं च निवेद्य मन्दरस्याभ्यर्थनां स्वीकुर्वन् काशीमविमुक्तपुरीं विहायात्रैव स्थायिरूपेण निवसतु भवानिति स्वयम्भूरपि ययाचे। येन दिवोदासस्य प्रजापालनरूपमनोरथसिद्धिर्भवेत्। मम नाडीद्वयमात्रं तस्य राज्ञः, शतक्रतोश्च राज्यं भविता। चन्द्रशेखरेण च पितामहप्रार्थनानुरोधेन तस्याभ्यर्थना स्वीकृता। इत्थं च—

जम्बूद्वीपे यथा काशी निर्वाणपददा सदा ॥
तथा बहुतिथं कालं द्वीपोऽभूत् सोऽपि मन्दरः।
यियासुना च देवेन मन्दरं चित्रकन्दरम् ॥
निजमूर्त्तिमयं लिङ्गमविज्ञातं विधेरपि।
स्थापितं सर्वसिद्धीनां स्थापकेभ्यः समर्पितुम् ॥

( का० ख० ३९।६९-७१ )

किन्तु मन्दरं गतेनापि पिनाकिनाऽविमुक्तक्षेत्रं न विमुक्तम्; अपि तु लिङ्गरूपेण तत्रासीदिति क्षेत्रमेतदविमुक्तं कीर्त्यते। तदारभ्यैव भुवि क्षेत्रस्यास्याविमुक्तक्षेत्रं नाम प्रथितम्, लिङ्गस्य चाप्यविमुक्तेश्वर इति संज्ञा प्रथिता।

## अविमुक्तेश्वरमाहात्म्यम्

अविमुक्तेश्वरलिङ्गं दृष्ट्वाऽविमुक्तक्षेत्रे नरः सर्वस्मात् कर्मबन्धनान्मुक्तो भवति। सर्वस्मिल्लोके सर्वे लोका विश्वेश्वरं पूजयन्ति; किन्तु स विश्वकर्त्ता विश्वेश्वरो मुक्तिप्रदमविमुक्तेश्वरलिङ्गं प्रपूजयति। एतदेव लिङ्गं नूनं लिङ्गस्थापनायाः प्रथम आकारः। एतत्पूर्वं कोऽपि लिङ्गस्थापनां न जानाति स्म। अविमुक्तेश्वरस्यादिलिङ्गं दृष्ट्वैव लिङ्गान्तराणां स्थापना जाता।

अविमुक्तेश्वरस्य नामश्रवणमात्रेण दुरितपुञ्जो भस्मीभवति। इदमेवादि-लिङ्गमिति कृत्वाऽस्य महामहिमा। दूरं गतोऽपि लोकोऽविमुक्तेश्वरलिङ्गनामश्रवणमात्रेण क्षणमात्रेण जन्म-जन्मार्जितादघान्मुक्तो भवति।

अविमुक्ते महाक्षेत्रेऽविमुक्तमवलोक्य च।
त्रिजन्मजनितं पापं हित्वा पुण्यमयो भवेत् ॥
यत्कृतं ज्ञानविभ्रंशादेनः पञ्चसु जन्मसु।
अविमुक्तेशसंस्पर्शात्तत्क्षयेदेव नान्यथा ॥

अर्चयित्वा महालिङ्गमविमुक्तेश्वरं नरः।
कृतकृत्यो भवेदत्र न च स्याज्जन्मभाक् कुतः॥
स्तुत्वा नत्वाऽर्चयित्वा च यथाशक्ति यथामति।
अविमुक्ते विमुक्तेशं स्तूयते नम्यतेऽर्च्यते॥
अनादिमदिदं लिङ्गं स्वयं विश्वेश्वरार्चितम्।
काश्यां प्रयत्नतः सेव्यमविमुक्तं विमुक्तये॥

(का० ख० ३९।८३-८७)

एतदपि सूचितं पुरस्ताद् यन्माघकृष्णचतुर्दश्यां (सम्भवतः फाल्गुनकृष्ण-चतुर्दश्याम्, महाशिवरात्रिपर्वणि) दिग्दिगन्तेभ्यो नानास्थानेभ्योऽनेकानि शिवलिङ्गानि अविमुक्तेश्वरलिङ्गसमीपमागत्यैकत्रीभवन्ति। तद्दिने शिवरात्रौ अवि-मुक्तेश्वरलिङ्गसन्निधौ रात्रिजागरणमनुतिष्ठन्ति ये नरास्ते योगिनां गतिभाजो भवन्ति। अपि च—

किं बिभेति नरो धीरः कृताघशिलोच्चयात्।
अविमुक्तेशलिङ्गस्य भक्तिवज्रधरो यदि॥
क्वाविमुक्तं महालिङ्गं चतुर्वर्गफलोदयम्।
क्व पापिपापशैलोऽल्पो यः क्षयेन्नामसम्भृतः॥

(तत्रैव—३९।९१-९२)

इत्थं च वाराणसीस्थमविमुक्तेश्वरलिङ्गमाहात्म्यं कीर्त्तयन् द्वाभ्यां पद्याभ्यां संसूच्यतेऽध्यायान्ते—

त्रिसन्ध्यमविमुक्तेशं यो जपेन्नियतः शुचिः।
दूरदेशविपन्नोऽपि काशीमृतफलं लभेत्॥
अविमुक्तं महालिङ्गं दृष्ट्वा ग्रामान्तरं व्रजेत्।
लब्ध्वाशु कार्यसंसिद्धिं क्षेमेण प्रविशेद् गृहम्॥

(तत्रैव—३९।९६-९७)

इत्थञ्चास्मिन्नध्याये फणिभूषणस्य वाराणसीं विहाय मन्दरनिवासोऽथ चावि-मुक्तेश्वरलिङ्गप्रतिष्ठापनसहितं अविमुक्तनगर्यां अविमुक्तेश्वरलिङ्गमाहात्म्यं च वर्णितम्।

## चत्वारिंशाध्यायपर्यालोचनम्—

### गृहस्थानां कर्त्तव्याकर्त्तव्यवर्णनम्

अविमुक्तेश्वरलिङ्गमथ चाविमुक्तक्षेत्रप्राप्त्युपायमिषेणेह चत्वारिंशेऽध्याये पुराणकारः श्रुतिस्मृतिसदाचारसम्मतान् गृहस्थैराचरणीयान् सदाचारानुपदिशन्नाह—

समीहितार्थसंसिद्धिर्लभ्यते पुण्यभारतः।
तच्च पुण्यं भवेद्विप्र! श्रुतिवर्त्मसभाजनात्॥

श्रुतिवर्त्मजुषः पुंसः संस्पर्शान्निश्यतो मुने।
कलिकालावपि सदा छिद्रं प्राप्य जिघांसतः॥

वर्जितस्य विधानेन प्रोक्तस्याकरणेन वै।
कलिकालावपि हतो ब्राह्मणं रन्ध्रदर्शनात्॥

(का० ख० ४०।५-७)

एवमेव अविमुक्तप्राप्त्युपायमिषेण विधिनिषेधकथनप्रसङ्गमुपवर्णयन् षण्मुखः प्रथमं निषिद्धान् आचारान् ब्रूते—

पलाण्डुं विड्वराहं च शेलुं लशुनगृञ्जने।
गोपीयूषं तण्डुलीयं वर्ज्यं च कवकं सदा॥

व्रश्चनान् वृक्षनिर्यासान् पायसापूपशष्कुलीः।
अदेवपित्र्यं पललमवत्सागोपयस्त्यजेत्॥

पय एकशफं हेयं तथा क्रामेलकाविकम्।
रात्रौ न दधि भोक्तव्यं दिवा न नवनीतकम्॥

टिट्टिभं कलविङ्कं च हंसं चक्रं प्लवम्बकम्।
त्यजेन्मांसाशिनः सर्वान् सारसं कुक्कुटं शुकम्॥

जालपादान् खञ्जरीटान् बुडित्वा मत्स्यभक्षकान्।
मत्स्याशी सर्वमांसाशी तन्मत्स्यान् सर्वथा त्यजेत्॥

हव्यकव्यनियुक्तौ तु भक्ष्यौ पाठीनरोहितौ।
मांसाशिभिस्त्वमी भक्ष्याः शश-शल्लक-कच्छपाः॥

श्वाविद्गोधे प्रशस्ते च ज्ञाताश्च मृगपक्षिणः।
आयुष्कामैः स्वर्गकामैस्त्याज्यं मांसं प्रयत्नतः॥

(तत्रैव—४०।९-१५)

अग्रे च सूचयति यद् यज्ञार्थं या पशुहिंसा सैव विधिसम्मता। अन्या च सर्वा हिंसा निषिद्धा। पर्युषितान्नं चापि त्याज्यम्। प्राणभये सम्प्राप्ते, यज्ञे, श्राद्धे, भेषजप्रयोगे तथा एतादृशेष्वितरेष्ववसरेषु मांसभक्षणं न दोषास्पदम्। इत्थमेव निष्कर्षरूपेण विज्ञापितम्—

पितृदेवक्रतुकृते मधुपर्कार्थमेव च।
तत्र हिंसाप्यहिंसा स्याद्धिसाऽन्यत्र सुदुस्तरा॥ ( का० ख० ४०।२० )

अत्र पितृदेवक्रतुकृत इत्युपलक्षणं तेनापद्धर्मरक्षणे हिंसा न निषिद्धा, यथा चौरादिभ्यो दस्युभ्यो व्याघ्रादिभ्यः सर्पादिभ्यो वा प्राणसंकटे सति। यदा तेषां वधं विना प्राणरक्षा न सम्भवति, तदा हिंसा न पापजननी; किन्तु स्वकलेवर-पुष्टयै जिह्वालौल्यवशाद् वा जन्तून् यो हिनस्ति, स पापमेव करोति—

यो जन्तूनात्मपुष्ट्यर्थं हिनस्ति ज्ञानदुर्बलः।
दुराचारस्य तस्येह नामुत्रापि सुखं क्वचित्॥ ( तत्रैव—४०।२१ )

अधोनिर्दिष्टा अष्टविधा लोका हिंसका भवन्ति—

भोक्ताऽनुमन्ता संस्कर्त्ता क्रयिविक्रयिहिंसकाः।
उपहर्ता घातयिता हिंसकाश्चाष्टधा स्मृताः॥ ( तत्रैव—४०।२२ )

शताश्वमेधकर्त्तुरपेक्षया अमांसभक्षकं षण्मुखः श्रेष्ठं मनुते। यतो हि यथाऽऽत्मनि तथा परस्मिन्नपि सुखदुःखानि द्रष्टव्यानि। सुखदुःखे धर्माधीने, अतो नूनं चातुर्वर्ण्यैः सुखाभिलाषुकैर्धर्मस्याचरणं विधेयम्। धर्माचरणं हि वहुधा द्रव्याधीनमतो न्यायो-पार्जितेनैव द्रव्येण पारलौकिकं कृत्यं दानादिकं च विधेयम्। दानं च देशे, काले, पात्र एव देयम्, तदैव तद्दानं कल्याणकरं भवति। अपात्राय दत्तं विधिरहितं च दानं न केवलं व्यर्थमुतावशिष्टपुण्यस्यापि विनाशकम्; किन्तु—

व्यसनार्थे कुटुम्बार्थे यदृणार्थे च दीयते।
तदक्षयं भवेदत्र परत्र च न संशयः॥ ( तत्रैव—४०।३० )

द्रव्यव्ययस्यापरः कश्चिन्महान् सदुपयोगः। तच्च मातृपितृविहीनस्य निजैर्द्रव्यैर्मौञ्जीपाणिग्रहणादिसंस्कारकरणम्। एतैः संस्कारकरणैरनन्तं पुण्यं भजते संस्कारयिता। एकस्मिन्नपि तादृशे बालके द्विजत्वप्रतिष्ठापनं महच्छ्रेयस्करम्। इत्थं चानाथस्य पाणिग्रहणेनापि फलम्—

यो ह्यनाथस्य विप्रस्य पाणिं ग्राहयते कृती।
इह सौख्यमवाप्नोति सोऽक्षयं स्वर्गमाप्नुयात्॥ (तत्रैव—४०।३३)

एतदप्युपलक्षणं मातृपितृहीनाया असमर्थमातृपितृसुताया वान्यायोपार्जितस्वधनेन कन्याविवाहसंस्कारकरणेन तादृशमेव महत्फलं भवति। प्रसङ्गेऽस्मिन् यदुक्तमन्यत्, तन्मूल एव पठनीयम्। स्त्रीणां शुद्धताप्रसङ्गे केचन श्लोका द्रष्टव्याः —

स्त्रियः पवित्राः सततं नैता दुष्यन्ति केनचित्।
मासि मासि रजस्तासां दुष्कृतान्यपकर्षति॥
पूर्वं स्त्रियः सुरैर्भुक्ताः सोम-गन्धर्व-वह्निभिः।
भुञ्जते मानुषाः पश्चान्नैता दुष्यन्ति केनचित्॥
स्त्रीणां शौचं ददौ सोमः पावकः सर्वमेध्यताम्।
कल्याणवाणीं गन्धर्वास्तेन मेध्याः सदा स्त्रियः[1]॥
(का० ख० ४०।३७-३९)

एतदनन्तरं कीदृशी कन्याया दानं करणीयमिति निरूपितम्। एतस्मिन्नेव सन्दर्भे एतदपि विज्ञापितं यद् या दयिता बलात्कारोपभुक्ता चोरहस्तगता वा तस्यास्त्यागो न विहितः।

कन्यादानस्याधिकारमप्यत्र सूचितम्। विहिते च काले कन्यादानमकुर्वाणः पापभाग् भवति। यदि च जातेऽपि कालातिपाते कन्यासंरक्षकास्तस्याः पाणिग्रहणं न कारयेयुः, अथवा दातुरभावश्चेत्तदा सा स्वयमेव स्वयंवराधिकारिणी जायते—

स्वयं त्वभावे दातृणां कन्या कुर्यात्स्वयंवरम्॥ (तत्रैव—४०।५१)

---

१. प्रसङ्गतोऽन्यान्यपि यथावसरे मेध्यानि तान्यपि वर्णितानि—

शयनासनयानानि कुणपं स्त्रीमुखं कुशाः।
यज्ञपात्राणि सर्वाणि न दुष्यन्ति बुधाः क्वचित्॥
वत्सः प्रस्नवणे मेध्यः शकुनिः फलपातने।
नार्यो रतिप्रयोगेषु श्वा मृगग्रहणे शुचिः॥
अजाऽश्वयोर्मुखं मेध्यं गावो मेध्यास्तु पृष्ठतः।
पादतो ब्राह्मणा मेध्याः स्त्रियो मेध्यास्तु सर्वतः॥
बलात्कारोपभुक्ता वा चोरहस्तगताऽपि वा।
न त्याज्या दयिता नारी नास्यास्त्यागो विधीयते॥
अम्लेन ताम्रशुद्धिः स्याच्छुद्धिः कांसस्य भस्मना।
संशुद्धी रजसा नार्यास्तटिन्या वेगतः शुचिः॥ (का० ख० ४०।४४-४८)

कदा नार्यस्त्याज्या इत्याद्यपि सूचितम् ।

शूद्रस्य भार्या शूद्रैव सा च स्वा च विशः स्मृते ।
ते च स्वा चैव राज्ञस्तु ताश्च स्वा चाग्रजन्मनः ॥
( का० ख० ४०।५४ )

परन्तु सवर्णविवाह एव दैव-पित्र्य-विहितकर्मार्थं प्रशस्तः । एतस्मिन्सन्दर्भे इह पुराणे, अन्यासु स्मृतिषु विस्तरेण विधिनिषेधौ सूचितौ । तत्सर्वं तत्तत्स्थानेषु जिज्ञासुभिः पठनीयं विज्ञेयं च ।

येषां गृहस्थानां गृहे जामयः ( भगिन्यादयः ) अनूजिता भवन्ति, ते खलु कृत्याभिर्निहतानीव विनाशं गच्छन्ति । अतो हि—

तदभ्यर्च्याः सुवासिन्यो भूषणाच्छादनाशनैः ।
भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ॥
यत्र नार्यः प्रमुदिता भूषणाच्छादनाशनैः ।
रमन्ते देवतास्तत्र स्युस्तत्र सफलाः क्रियाः ॥
यत्र तुष्यति भर्त्रा स्त्री स्त्रिया भर्ता च तुष्यति ।
तत्र वेश्मनि कल्याणं सम्पद्येत पदे पदे ॥
( तत्रैव—४०।५८-६० )

गृहस्थस्य कृते पञ्चविधा यज्ञाः प्रोक्ताः । पञ्चानां शुभानां यज्ञानां नामानि सन्ति—(१) अहुत-(२) हुत-(३) प्रहुत-(४) प्राशित-(५) ब्राह्महुतानि । तथा चामीषां परिचयः —

जपो हुतो हुतो होमः प्रहुतो भौतिको बलिः ।
प्राशितं पितृसन्तृप्तिर्हुतं ब्राह्मं द्विजार्चनम् ॥
पञ्च यज्ञानिमान् कुर्वन् ब्राह्मणो नाऽवसीदति ।
एतेषामननुष्ठानात् पञ्चसूना अवाप्नुयात् ॥
( तत्रैव—४०।६२-६३ )

एतेषां समेषां विधि-विधानान्यपि सूचितानि । द्विजातिभिः किं किं कथमनुष्ठेय-मिति सर्वं सूचितम् ।

'पञ्चसूनाः' इति पदेन पूर्वोक्तपञ्चसूनाकर्मसु पञ्चानां हिंसाभिर्यत्पापं तस्य भागी भवति गृहस्थः । सति साक्षात्कारे ब्राह्मणं कुशलं पृच्छेत्, क्षत्रियमनामयम्, वैश्यं सुखं शूद्रं च सन्तोषं पृच्छेत् । पोष्यवर्गस्य भरण-पोषणे करणीये तयोरकरणे प्रत्यवायो भवति । पोष्यवर्गश्च—

माता पिता गुरुः पत्नी त्वपत्यानि समाश्रिताः ।
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्गा अमी नव ॥ ( तत्रैव—४०।६७)

एतदपि निगदितं यत्स एव पुरुषः जीवति, यो बहुभिरुपजीव्यते। अन्यथा स्वोदरम्भरिर्जनो नूनं जीवन्नपि जीवन्मृतसमः।

एवमेव च गृहिणां नानाकर्माणि यान्याचरणीयानि यानि वा नाचरितव्यानि, तानि प्रायः समग्राणि विस्तरेणास्मिन्नध्याये निर्दिष्टानि। पुरस्ताच्चातिथिसेवासत्कारसन्दर्भे विस्तरेण प्रोक्तवान् पुराणकारः। तस्मिन्नेव प्रसङ्गे कानि नवकर्माणि तमतिथिं प्रति विधेयानि, कानि चेतरत्र निषिद्धानीत्यपि प्रोक्तम् –

तथैषद्व्ययुक्तानि कार्याण्येतानि वै नव।
आसनं पादशौचं च यथाशक्त्याशनं क्षितिः॥
शय्यातृणजलाभ्यङ्गदीपा गार्हस्थ्यसिद्धिदाः।
तथा नव विकर्माणि त्याज्यानि गृहमेधिनाम्॥
पैशुन्यं परदाराश्च द्रोहः क्रोधानृताऽप्रियम्।
द्वेषो दम्भश्च माया च स्वर्गमार्गार्गलानि हि॥
( का० ख० ४०।७४-७६ )

एवं प्रकारेण नवावश्यककर्माणि, नव गोप्यानि, नव प्रकाश्यानि अक्षयपुण्यफलकारकनवदानानि, नव निष्फलदानानि, इत्यादिनवनवकानि। अन्यदपि नवकमतिमहत्त्वपूर्णमिह वर्णितम्। तद्यथा—

सत्यं शौचमहिंसा च क्षान्तिर्दानं दया दमः।
अस्तेयमिन्द्रियाकोचः सर्वेषां धर्मसाधनम्॥
अभ्यस्य नवतिं चैतां स्वर्गमार्गप्रदीपिकाम्।
सतामभिमतां पुण्यां गृहस्थो नावसीदति॥
जिह्वा भार्या सुतो भ्राता मित्रदाससमाश्रिताः।
यस्यैते विनयाढ्याश्च तस्य सर्वत्र गौरवम्॥
( तत्रैव—४०।८६-८८ )

इत्थमेव च गृहिणीनां षट् दूषणानि प्रोक्तानि—(१) पानम् ( मद्यादिपानम् ), (२) दुर्जनसंसर्गः, (३) पतिविरहितमन्यगृहे वासः, (४) स्वेच्छाचारिता, (५) इतस्ततो भ्रमणम्, (६) अन्यगृहे रात्रिशयनम्। तद्यथा—

पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्।
स्वप्नोऽन्यगृहवासश्च नारीणां दूषणानि षट्॥ ( तत्रैव—४०।८९)

या नारी व्यभिचारिणी, सा महिषीति संज्ञायते। तथाविधां दोषजुष्टां स्त्रियं कामयमानः पुरुषोऽपि शास्त्रेषु माहिषिकः कथ्यते। एवं क्रमेण बहवो विधिनिषेधा गृहस्थानां कृते सम्प्रोक्ताः। एतदप्युक्तं यद्यदा कश्चिद्विद्याविनयसमृद्धः श्रोत्रियो गृहमागच्छति, तदा सर्वाण्यन्नानि स्वात्मनः परमगतिमाकलयन् प्रमुदिता भवन्ति। यदा च भ्रष्टशौचव्रताचारा आगच्छन्ति, तदाऽन्नानि रुदन्ति। स्त्रीणां केशवपनविषयमधिकृत्य नियमाश्चात्र प्रोक्ताः। परिवेत्ता को भवति, परिवित्तिश्च क इति सूचयन् ब्रूते—

दाराग्निहोत्रदीक्षां च कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः॥
(का० ख० ४०।१०३)

विधिनिषेधप्रसङ्गे वस्तूनां भक्ष्याभक्ष्यप्रकारविषयेऽपि गृहस्थानां कृते विधानानि निगदितानि। भोजनप्रदाने दानप्रदाने च नियमा दर्शिताः। देवस्व-ब्रह्मस्वापहरणं च नानुष्ठेयं यतस्तेन कुलनाशो भवति। अन्यच्च—

वाचा यच्च प्रतिज्ञातं कर्मणा नोपपादितम्।
ऋणं तद्धर्मसंयुक्तमिहलोके परत्र च॥ (तत्रैव—४०।१२१)

यज्ञशेषोऽन्नं नूनममृतं कथ्यते, यज्ञशेषं किल विघसमित्युच्यते। स महापुण्यं भजते योऽमृतान्नभोजी विघसाशी च भवति। स्नानानन्तरं जलेनैवापि पितृतर्पणं सर्वयज्ञक्रियाफलदायकं भवति। कानिचनान्नप्रकाराणि सूचितानि यानि सर्वथाऽभक्ष्याणि। अतिथिभोजनकरणेन महत्पुण्यं भवति।

तत्र केचनैतादृशाः पुरुषा येषां कृते सूतककृता दोषा न भवन्ति—

सत्रिणां दीक्षितानां च यतीनां ब्रह्मचारिणाम्।
एतेषां सूतकं नास्ति ऋत्विजां कर्म कुर्वताम्॥ (तत्रैव—४०।१२८)

अस्मिन्नध्याये कथितमेतद्यत्कथं भोजनं गृहमेधिभिः कार्यं कथं च न कार्यम्। मण्डलादिकरणस्य विधिविधानमपि दर्शितम्। एकमतिमहत्त्वपूर्णं वचनमत्र दृश्यते—

धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः।
क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः॥ (तत्रैव—४०।१३८)

नीलीरक्तरक्तस्य वस्त्रस्य त्यागप्रसङ्गा अपि सूचिताः। पुनरपि सूचितं यद्वैश्वदेवेन होमेन देवताभ्यर्चनैर्जपैः ऋग्यजुःसामसंस्कृतमन्नममृतं भवति। अन्यस्मिन्प्रसङ्गे सूचितं यद् वृथा शपथं न कुर्यात्। कदा च शपथकरणं विहितं सप्रसङ्गं तन्निर्दिष्टम्। क्षमाया अपि महन्महत्त्वं दर्शितम्। बहून्विधिनिषेधानुपदिशन् पुराणकारो मोक्षलाभविषयप्रकारं दर्शयति—

न शब्दशास्त्राभिरतस्य मोक्षो न चैव रम्यावसथप्रियस्य।
न भोजनाच्छादनतत्परस्य न लोकवित्तग्रहणे रतस्य॥
एकान्तशीलस्य सदैव तस्य सर्वेन्द्रियप्रीतिनिवर्त्तकस्य।
स्वाध्याययोगे गतमानसस्य मोक्षो ध्रुवं नित्यमहिंसकस्य॥
क्वैकान्तशीलत्वमिहास्ति पुंसः क्व चेन्द्रियप्रीतिनिवृत्तिरस्ति।
क्व योगयुक्तिः क्व च दैवतेज्या काश्यां विनैभिः सहजेन मुक्तिः॥
विश्वेशसंशीलनमेव योगस्तपश्च विश्वेशपुरीनिवासः।
व्रतानि दानं नियमा यमाश्च स्नानं द्युनद्यां यदुदग्वहायाम्॥
( का० ख० ४०।१६०-१६३ )

इत्थं निवसता, न्यायागतधनादीनां दानं प्रकुर्वता, गार्ह्याणि कार्याणि सम्पादयता काशीनाथाविमुक्तेश्वरप्रसादेन सर्वतोर्थादियात्राप्रभृतिफलं सहैव मुक्तिः सुलभेति दिक्।

## एकचत्वारिंशाध्यायपर्यालोचनम्—

काशीखण्डस्यामुष्मिन्नध्याये तृतीय-चतुर्थाश्रमप्रवेशकालो विधानानि च तयोराश्रमयोरुक्तानि। प्रोक्तं च—

उषित्वैवं गृहे विप्रो द्वितीयादाश्रमात्परम्।
वली-पलित-संयुक्तस्तृतीयाश्रममाविशेत् ॥ ( तत्रैव—४१।१ )

पुत्रं पौत्रं च दृष्ट्वा ग्राम्याहारान् विहाय, गृहभारं पुत्रं समर्प्य पत्नीसहितं पत्नीरहितं वा तस्मिन् तृतीयाश्रमे प्रविशेत्। तस्य वेषो वसनाच्छादिकी दिनचर्या, नित्यकर्माचरणं च यथा सर्वाणि सम्पाद्यानि, तानीह सम्प्रोक्तानि। आहारादिविषये तत्प्रकारविषये च सूचितम्। तेन सर्वथा ग्रामं ( नगरं च ) विहाय वनवासिना भवितव्यम्, श्रमणशीलेनापि च। भोजनसम्बन्धे चापि प्रोक्तम्—

ग्रामादानीय वाऽश्नीयादष्टौ ग्रासान् वसन् वने।
इत्थं वनाश्रमी विप्रो ब्रह्मलोके महीयते॥ ( तत्रैव—४१।१३ )

अत ऊर्ध्वं संन्यासाश्रमप्रवेशविधिविधानं वर्णितम्। तद्यथा—

अतिवाह्यायुषो भागं तृतीयमिति कानने।
आयुषस्तु तुरीयांशे त्यक्त्वा संगान् परिव्रजेत्॥ ( तत्रैव—४१।१४ )

संन्यासग्रहणात्पूर्वं मोक्षार्थं परिव्राजकधर्मग्रहणात्पूर्वं च देवर्षिपितॄणां त्रयाणां यदृणं तस्य संशोधनमनिवार्यत आवश्यकम्, तथा च वेदाध्ययनं गार्ह्ययज्ञानां सम्पादनञ्च कार्यम्, अर्थाद् गृहस्थस्य पाणिग्रहण-पुत्रोत्पादनादिधर्मान् सम्पाद्यैव यथाक्रममग्रिमयोराश्रमयोः प्रवेशो विप्राणां कृते साधु मोक्षसाधकः।

संन्यासिना च न कस्मैचन भयमुत्पाद्यम्। तदैव संन्यासी स्वयमपि सर्वतोऽभयो भवति। तेन सदा विचरणशीलेन भाव्यम्। अग्निहोत्राग्नित्यागिना च तेन भवितव्यम्। तेन सर्वत्र ममताशून्येन समभावमयेनापि भवितव्यम्। यतेश्च चत्वारि सदाचरणानि—(१) ध्यानम्, (२) शौचम्, (३) भिक्षा, (४) नित्यमेकान्तशीलता च। अपरञ्च वर्षर्तौ चतुर्षु मासेषु न परिभ्रमेत्। यतो हि तेन बीजाङ्कुराणां जन्तूनां च हिंसा भवति। अन्येऽपि सदाचारा अत्र यतीनां कृते विहिताः सन्ति। अमी आचारा आवश्यकाः —

कुसुम्भवासा दण्डाढ्यो भिक्षाशी ख्यातिवर्जितः।
अलाबुदारुमृद्वेणुपात्रं शस्तं न पञ्चमम्॥ (का०ख० ४१।२४)

यतिना धातुपात्रं तु नैव ग्राह्यं न वा तत्र वराटकसङ्ग्रहो विधेयः। तेन रमणी चापि स्नेहभावेन न द्रष्टव्या। संन्यासी एककालमेव भिक्षां चरेत्। क्व कथं च यतिर्भिक्षां चरेदित्यपि प्रदर्शितम्। स एव यतिर्मोक्षं भजते यो नूनम्—

अल्पाहारो रहःस्थायी त्विन्द्रियार्थेष्वलोलुपः।
रागद्वेषविनिर्मुक्तो भिक्षुर्मोक्षाय कल्पते॥ ( तत्रैव—४१।२९ )

एतादृग्यतिर्यस्य स्थाने (गृहे) क्षणमात्रमपि निवसति, स कृतकृत्यो जायते। केभ्यो हेतुभ्यो मुमुक्षुणा भवितव्यमित्याह चतुर्भिः पुराणकारः —

दृष्ट्वा जराभिभवनमसह्यं रोगपीडितम्।
देहत्यागं पुनर्गर्भं गर्भक्लेशं च दारुणम्॥

नानायोनिनिवासं च वियोगं च प्रियैः सह।
अप्रियैः सह संयोगमधर्माद् दुःखसम्भवम्॥

पुनर्निरयसंवासं नानानरकयातनाः।
कर्मदोषसमुद्भूता नृणां गतिरनेकधा॥

देहेष्वनित्यतां दृष्ट्वा नित्यतां परमात्मनः।
कुर्वीत मुक्तये यत्नं यत्र यत्राश्रमे रतः॥
( तत्रैव—४१।३२-३५ )

यश्च खलु यतिर्भिक्षापात्रं विहाय करावेव पात्रं विधाय भिक्षां करोति, स करपात्री भवति, तस्य च दिने दिने शतगुणं पुण्यं भवति। इत्थं च—

आश्रमांश्चतुरस्त्वेवं क्रमादासेव्य पण्डितः।
निर्द्वन्द्वस्त्यक्तसङ्गश्च ब्रह्मभूयाय कल्पते॥ ( तत्रैव—४१।३७ )

अत ऊर्ध्वमतीवमहत्त्वविशिष्टः सन्दर्भो मोक्षविषयको व्याख्यातुमत्रोपक्रमते पुराणकारः। तत्रात्मनो ज्ञानहेतून् ब्रवीति—

श्रुतिस्मृतिपुराणानां विद्योपनिषदस्तथा ।
श्लोकाः सूत्राणि भाष्याणि यच्चान्यद्वाङ्मयं क्वचित् ॥

वेदानुवचनं ज्ञात्वा ब्रह्मचर्यं तपो दमः ।
श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः ॥

( का० ख० ४१।३९-४० )

### आत्मज्ञानं योगश्च

यथा वदति श्रुतिः—'आत्मा वाऽरे श्रोतव्यो मन्तव्यो द्रष्टव्यश्च', तथैवात्रापि निगदितं यत् स एव आत्मा सर्वैराश्रमवासिभिर्विजिज्ञास्यः, श्रोतव्यो मन्तव्यो द्रष्टव्यश्च । यतो ह्यात्मज्ञानेनैव मुक्तिर्भवति; परन्तु तदात्मज्ञानं योगादृते न सम्भवति । असौ योगश्च चिरकालमभ्यासादेव सिद्ध्यति । न हि अरण्यवासेन, बहुग्रन्थपठनेन, न वा व्रत-दान-तपोयागप्रभृतिभिर्योगसिद्धिर्जायते । शौच-मौन-मन्त्राराधनादिभिश्च न योगः साध्यः । तस्य सिद्ध्यै अभ्यासादय एव उपाया अनिवार्याः —

अभियोगात्सदाऽभ्यासात्तत्रैव च विनिश्चयात् ।
पुनः पुनरनिर्वेदात् सिद्ध्येद्योगो न चान्यथा ॥

( तत्रैव—४१।४५ )

अमुमेव सन्दर्भं पञ्चभिः पद्यैः काशीखण्डकार इह स्पष्टीकरोति—

आत्मक्रीडस्य सततं सदात्ममिथुनस्य च ।
आत्मन्येव सुतृप्तस्य योगसिद्धिर्न दूरतः ॥

अत्रात्मव्यतिरेकेण द्वितीयं यो न पश्यति ।
आत्मारामः स योगीन्द्रो ब्रह्मीभूतो भवेदिह ॥

संयोगस्त्वात्ममनसोर्योग इत्युच्यते बुधैः ।
प्राणापानसमायोगो योग इत्यपि कैश्चन ॥

विषयेन्द्रियसंयोगो योग इत्यप्यपण्डितैः ।
विषयासक्तचित्तानां ज्ञानं मोक्षश्च दूरतः ॥

दुर्निवारा मनोवृत्तिर्यावत् सा न निवर्त्तते ।
किंवदन्त्यपि योगस्य तावन्नेदीयसी कुतः ॥

( तत्रैव —४१।४६-५० )

पुनरपि तेन कथ्यते यत्परमात्मा एव क्षेत्रज्ञः । यो मनोवृत्तिविरहितं विधाय परमात्मनि चैकीकृत्याभ्यसति, स योगयुक्त इत्युच्यते ।

एतत्सर्वं विवृण्वन् पुराणकारो ब्रूते यच्चक्षुःश्रोत्रादीनि यानि बहिरिन्द्रियाणि बुद्ध्यहङ्कारचित्तान्यन्तरिन्द्रियाणि च तानि मनसि कृत्वा तथाभूतं मनश्चात्मनि योजयेत्। ततश्च सर्वभावविनिर्मुक्तं क्षेत्रज्ञमात्मानं ब्रह्मणि न्यसेत्। अत्रात्मना साक्षित्व-द्रष्टृत्व-प्रत्यक्त्वादिसर्वविकाररहितेन भवितव्यम्। अर्थाच्छुद्धं त्वम्पदार्थं शुद्धे सजातीय-विजातीय-स्वगतभेदरहिते सच्चिदानन्दरूपात्मके ब्रह्मणि न्यसेत्। एतदेव ध्यानमसावेव योगः। अवशिष्टश्चान्यो ग्रन्थविस्तरः। ब्रह्म नूनं स्वसंवेद्यम्। यथा कुमारी स्त्रीसुखं न वेत्ति, यथा वा जन्मान्धो ज्वलन्तीं दीपशिखां न पश्यति, तथैव योगहीनो मनुजः स्वसंवेद्यं ब्रह्म न पश्यति। नित्यं खलु योगाभ्यासशीलो जन एव स्वसंवेद्यं ब्रह्म साक्षात्कर्तुं समर्थः। यथा हि—

क्षणमप्येकमुदकं यथा न स्थिरतामियात्।
वाताहतं यथा चित्तं तस्मात्तस्य न विश्वसेत्॥

(का० ख० ४१।५७)

तदर्थं च मरुन्निरोधः कार्यः, तत्सिद्ध्यै च षडङ्गो योगोऽभ्यसनीयस्तत्साक्षात्काराय। तानि चाङ्गानि—

आसनं प्राणसंरोधः प्रत्याहारश्च धारणा।
ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट्॥

(तत्रैव—४१।५९)

एतदनन्तरं पुराणकारेण सर्वाणि योगाङ्गानि संक्षेपेण विवृतानि। आसनमधिकृत्य सूचितं तत्र यदासनानि तावन्ति भवन्ति यावन्त्यो जीवयोनयः; किन्तु योगिनः सिद्धिदायकं तु सिद्धासनमेव। एतस्मिन् प्रकरणे संस्कृतटीकायां विस्तरेण तत्स्वरूपं समुपस्थापितम्। पाठान्तरदृष्ट्या सिद्धासनं हि पद्मासनमेव। नित्यमेतस्याभ्यसनाच्छरीरदाढर्यं भवति। अस्यासनस्वरूपकथनानन्तरं कथयति पुराणकारो निष्कर्षतत्त्वम्—

अथवा ह्यासने यस्मिन् सुखमस्योपजायते।
स्वस्तिकादौ तदध्यास्य योगं युञ्जीत योगवित्॥

(तत्रैव—४१।६४)

अमुष्मिन् सन्दर्भे सूचितं यत् तोयवह्निसामीप्ये नाभ्यसेत्, न जीर्णारण्यगोष्ठयोः, न दंशमशकाकीर्णे, न चैत्य-चत्वरयोः, न वा केशभस्म-तुषाङ्गार-कीकसादिप्रदूषिते स्थाने, न वा पूतिगन्धादिजुष्टे स्थाने, न वा जनसंकुले योगमभ्यसेत्। एतादृशेषु स्थलेषु योगाभ्यासो निषिद्धः। योगाभ्यासश्च तत्र कार्यो यत्स्थानं सर्वबाधाविरहितं भवेत्, यच्च सर्वेन्द्रियसुखावहं स्यात्। यद्धि मनःप्रसादजनकम्, यच्च स्रग्धूपामोदमोदितं भवेत्, तत्र योगमभ्यसेत्। योगिना भोजनेन नातितृप्तेन भवितव्यम्,

अथ च क्षुधार्त्तेनापि न भाव्यम् । योगाभ्यासो मलमूत्रबाधितोऽपि न भवेत्, अध्वाखिन्नो न भवेत्, चिन्ताग्रस्तोऽपि न भवेत् । इत्थं च सर्वाण्यावश्यकविवरणानि योगाभ्यासिनः कृतेऽत्र निर्दिष्टानि ।

सर्वतः प्रथममिहासनस्य विधिं विज्ञापयति, ततः परं सूचयति यद् मरुन्निरोध-रूपस्य प्राणायामस्याभ्यासेन स्थाणुत्वमाप्नोति योगी । यतोऽनिले चञ्चले सर्वं चलं भवति । अनिलनिरोधेन स्थाणुत्वप्राप्तिस्तया च कालभयं विलुप्यते । मन्द-मध्यमोत्त-मास्त्रिविधाः प्राणायामा भवन्ति । तत्र—

प्रथमेन जयेत्स्वेदं द्वितीयेन तु वेपथुम् ।
विषादं हि तृतीयेन सिद्धः प्राणोऽथ योगिना ।।
भवेत्क्रमात्सन्निरुद्धः सिद्धः प्राणोऽथ योगिना ।
क्रमेण सेव्यमानोऽसौ नयते यत्र चेच्छति ।।
( का० ख० ४१।७७-७८ )

अत्र असम्यग्विधानेन यद्दुष्फलानि शरीरविदारणं कुष्ठादीनि च जायन्ते, तदर्थं क्रमशः शनैः शनैरभ्यासो विधेयः। यदा चाभ्यासेन प्राणायामस्य नाडीचक्रमना-कुलं भवति, तदैव योगी प्राणरोधनसमर्थो भवति । अत्र त्रिभिर्हि श्लोकैः किञ्चिन्महत्त्वपूर्णं विधानं विज्ञाप्यते—

दृढासनो यथाशक्ति प्राणं चन्द्रेण पूरयेत्[1] ।
रेचयेदथ सूर्येण प्राणायामोऽयमुच्यते ।।
स्रवत्पीयूषधारौघं ध्यायंश्चन्द्रसमन्वितम् ।
प्राणायामेन योगीन्द्रः सुखमाप्नोति तत्क्षणात् ।।
रविणा प्राणमाकृष्य पूरयेदौदरीं दरीम् ।
कुम्भयित्वा शनैः पश्चाद्योगी चन्द्रेण रेचयेत् ।।
( तत्रैव—४१।८४-८६ )

ध्येयं दर्शयन् ध्यानमेतत्पूर्वोक्तम् । तथा च त्रिविधप्राणायामस्य फलं हि—

ज्वलज्ज्वलनपुञ्जाभं शीलयन्नुष्मगुं हृदि ।
अनेन याम्यायामेन योगीन्द्रः शर्मभाग्भवेत् ।।
( तत्रैव—४१।८७ )

---

१. एतेषां पद्यानां मूले संस्कृतटीका मननीया । सूर्यनाडी पिङ्गलानाडी, चन्द्रनाडी इडानाडी, इत्यादि योगदर्शने ज्ञेयम् ।

इत्थं च उभयायामसेवनान्मासत्रयाभ्यासात् सिद्धनाडीगणो भूत्वा योगी सिद्धप्राणो भवति। एतेन च योगी यथेष्टवायुधारणसमर्थो भवति। तस्य जठरानलः प्रदीप्तो भवति। अथ च 'आधारचक्रस्थां परां वाणीं श्रोतुं स समर्थो भवन् कलेवरेणापि नीरोगो जायते। अधमे प्राणायामे स्वेदो जायते, मध्यमे कम्पः, उत्तमे च देहिनो बद्ध-पद्मासनस्य मुहुर्मुहुर्भूमितो देहो नूनमुत्थितो भवति। तत्र प्रक्रियाऽपि प्रोक्ता—

प्राणायामैर्दहेद्दोषान् प्रत्याहारेण पातकम्।
मनोधैर्यं धारणया ध्यानेनेश्वरदर्शनम्॥
समाधिना लभेन्मोक्षं त्यक्त्वा धर्मं शुभाशुभम्।
आसनेन वपुर्दार्ढ्यं षडङ्गमिति कीर्तितम्॥
(का० ख० ४१।९२-९३)

चतुर्भिरधोलिखितैः पद्यैः स्कन्दो वक्ताऽत्र महन्महत्त्वपूर्णं तथ्यं निर्दिशतीति तेषां श्लोकानामुद्धरणलोभं न निरोद्धुं शक्नोमि—

प्राणायामद्विषट्केन प्रत्याहार उदाहृतः।
प्रत्याहारैर्द्वादशभिर्धारणा परिकीर्तिता॥
भवेदीश्वरसंगत्यै ध्यानं द्वादशधारणम्।
ध्यानद्वादशकेनैव समाधिरभिधीयते॥
समाधेः परतो ज्योतिरनन्तं स्वप्रकाशकम्।
तस्मिन् दृष्टे क्रियाकाण्डं यातायातं निवर्तते॥
पवने व्योमसम्प्राप्ते ध्वनिरुत्पद्यते महान्।
घण्टादीनां प्रवाद्यानां ततः सिद्धिरदूरतः॥
(तत्रैव—४१।९४-९७)

तदाऽनाहतनादश्रवणं भवतीति तत्त्वम्। युक्तेन प्राणायामेन सर्वव्याधीनां क्षयो जायते। एतद्विपरीतेनायुक्तेनाभ्यासयोगेन सर्वव्याधिसमुद्भवः। पवनस्य व्यतिक्रमाद् विविधा दोषाः समुद्भवन्ति, यथा हि—हिक्का, कासः, श्वासः, शिरःकर्णाक्षिप्रभृति-वेदनाप्रभृतयः। अतो योगाभ्यासी युक्तं युक्तं वायुं त्यजेत्, युक्तं युक्तं पूरयेद् बध्नीयाच्च युक्तं युक्तम्।

एवमेव यः स्वाङ्गानि सर्वतस्तथैव प्रत्याहरति यथा कूर्मो हि नाम स्वाङ्ग-सङ्कोचं विदधाति, स विगतकल्मषः सन् प्रत्याहारपटुर्भवति।

अत्र प्रसङ्गेन महामुद्रादीनां दशमुद्राणां मध्ये विपरीताख्यां करणीं मुद्रां[1] वक्तुमुपक्रमन्नाह—

नाभिदेशे वसेद्भानुस्तालुदेशे च चन्द्रमाः।
वर्षत्यधोमुखश्चन्द्रो ग्रसेदूर्ध्वमुखो रविः॥
( का० ख० ४१।१०३ )

तच्च विपरीताख्या करणी-मुद्रा योगिभिर्गुरूपदेशैः साक्षाच्छिक्षणप्रशिक्षणैः साध्या, येनोर्ध्वं नाभिः सूर्यो भवेदधस्ताच्च चन्द्ररूपस्तालुः, येन सुधावर्षणजन्यामृतफलं चन्द्रमुखेन योगी लभेत। अत्राग्रे निगद्यते यत्तालुविवरे रसनां निधायोर्ध्वमुखोऽमृतं पायं पायमस्या मुद्रायाः षण्मासाभ्यासेन योगी निर्जरतामाप्नोति। अपि च ऊर्ध्वजिह्वः स्थिरो भूत्वा यो योगवेत्ता योगी सोमामृतपानं नियमेन विदधाति, सोऽसन्दिग्धरूपेण मासार्धेन मृत्युं जयति। एवमत्र तस्यामृतपानस्य विविधानि नानाकालिकानुष्ठानजफलानि वर्णितानि। एकमेव फलमुक्त्वा विरमामि विस्तरभयात्—

नित्यं सोमकलापूर्णं शरीरं यस्य योगिनः।
तक्षकेनापि दष्टस्य विषं तस्य न सर्पति॥
( तत्रैव—४१।११० )

यदा च योगी भवेदासनकुशलः, प्राणायामजुष्टः, प्रत्याहारसमृद्धस्तदा धारणामभ्यस्येत्। का नाम धारणेत्यत्र व्याख्यायते--"मनसो निश्चलत्वेन पञ्चभूतानां धारणं पृथक् पृथग् या करोति, सा धारणेत्युच्यते"।

तदनु विज्ञाप्यते यद्भूतानां क्षित्यप्प्रभृतीनां धारणायै हृदि कीदृग् ध्यानं विधेयमन्ते चाकाशाख्यमहाभूतमधिकृत्य निगद्यते—

---

१. संस्कृतटीकाकारो विद्वान् रामानन्दो हठयोगप्रदीपिकात उद्धरति—

"महामुद्रा महाबन्धो बन्धो जालन्धराभिधः।
करणी विपरीताख्या वज्रोलीशक्तिचालनम्॥
एतद्धि मुद्रादशकं जरामरणवर्जितम्"॥

अपरं च—

"यत्किञ्चित्स्रवते चन्द्रादमृतं दिव्यरूपि च।
तत्सर्वं ग्रसते सूर्यस्ततस्तस्य विनाशिता"॥

अत एव योगशास्त्रे करणं विपरीताख्यम्—"तत्रास्ति करणं दिव्यं सूर्यस्य मुखबन्धनम्"। तच्च गुरूपदेशत एव साध्यम्।

आकाशं च मरीचिवारिसदृशं यद् ब्रह्मरन्ध्रस्थितं
यन्नाथेन सदाशिवेन सहितं शान्तं हकाराक्षरम् ।
प्राणं तत्र विनीय पञ्चघटिकं चित्तान्वितं धारये-
देषा मोक्षकपाटपाटनपटुः प्रोक्ता नभो धारणा ॥

( का० ख० ४१।११७ )

तत्र खलु—स्तम्भनी, प्लावनी, दहनी, भ्रामणी, शमनी चेति भूतानां पञ्च धारणा भवन्ति । समन्त्रं मन्त्रविरहितं च द्विविधं ध्यानं प्रोच्यते । तत्र ध्यानमुद्रा नूनमतिसिद्धिदा । तत्रान्तश्चेतो बहिश्चक्षुरवस्थाप्य सुखासनं विधाय ध्यानकरणं विहितम् । शब्दादितन्मात्रा यावत् तिष्ठति कर्णादौ तावदेव ध्यानम् । ततः परं या स्थितिः, स समाधिरित्युच्यते । अन्यच्च—

धारणा पञ्चनाडीका ध्यानं स्यात् षष्टिनाडिकम् ।
दिनद्वादशकेन स्यात्समाधिरिह भण्यते ॥

( तत्रैव—४१।१२४ )

समाधिं निरूपयन्निगदति—

जलसैन्धवयोः साम्यं यथा भवति योगतः ।
तथात्ममनसोरैक्यं समाधिरिह भण्यते ॥

( तत्रैव—४१।१२५ )

तत्र यदा प्राणः संक्षीयते मनश्च प्रलीयते तदा समरसत्वं भवति, स एव समाधिः । द्वयोर्जीवात्मपरमात्मनोर्यत्समत्वं यत्र च सर्वे सङ्कल्पा नष्टा भवेयुः, स समाधि-रभिधीयते । समाधियुक्तस्य योगिनः स्वरूपमप्यद्भुतम् । स कालेन न काल्यते, कर्मणा न लिप्यते, शस्त्रास्त्रैश्च न भिद्यते । समाधिना युक्तो योगी भवत्येवंविधः ।

पुरतश्च समाधिसमृद्धस्य योगिनो वैशिष्ट्यमिह साधु प्रदर्शितम्, तेनार्जिता सिद्धिरपि प्रदर्शिता । योगी च योगाभ्यासेन निरालम्बो निरातङ्को निरामयो भूत्वा षडङ्गयोगविधिना परब्रह्मणि लीयते, ब्रह्ममयश्च जायते ।

योगी किल जलविरहितभस्मादीनां सर्वाङ्गलेपनं कुर्यात् । कदुष्णं लवणमय-मन्नादिकं न भुञ्जीत । क्षीरभोजी च योगाभ्यासी भवेत् । यदा च सः—

ब्रह्मचारी जितक्रोधो जितलोभो विमत्सरः ।
अब्दमित्थं सदाभ्यासात् स योगीति निगद्यते ॥
महामुद्रां नभोमुद्रामुड्डीयानं जलन्धरम् ।
मूलबन्धस्तु यो वेत्ति स योगी योगसिद्धिभाक् ॥
शोधनं नाडीजालस्य घटनं चन्द्रसूर्ययोः ।
रसानां शोषणं सम्यङ् महामुद्राऽभिधीयते ॥

( तत्रैव—४१।१३५-१३७ )

अग्निमाभ्यां द्वाभ्यां पद्याभ्यां महौघविनाशिन्या महामुद्राया धारणप्रकारो विज्ञापितः । महामुद्रा कदा विहातव्येत्यपि सूचितम् । अस्या मुद्राया अभ्यासकाले पथ्यापथ्यभक्षणस्य विचारोऽप्रासङ्गिको यतोऽमुष्याः साधनेन सर्वं नीरसमपि भक्ष्यं पीयूषवज्जायते । यथोक्तं संस्कृतटीकाकृता—"हठयोगप्रदीपिकायामस्याः सम्यक्साधन-प्रकारो व्याख्यातः । इयं च 'महामुद्रा' तदनुसारेण जरामृत्युविनाशिनी प्रोच्यते" इति । एतस्या अभ्यासेन क्षयकुष्ठप्रभृतयो जीर्णा असाध्या रोगा अपि विनश्यन्ति[1] ।

एतदनन्तरं खेचरीमुद्रासाधनविधिस्तस्याः साधनफलञ्च निगदितमस्ति । अस्या मुद्रायाः संज्ञासन्दर्भे प्रोक्तम्—

चित्तं चरति खे यस्माज्जिह्वा चरति खे गता ।
तेनैषा खेचरीनाम मुद्रा सिद्धैर्निषेविता ॥
( का० ख० ४१।१४५ )

अस्याः खेचरीमुद्राया एवापरं नाम नभोमुद्रा । तद्विषये प्रोक्तम्—

यावद् बिन्दुः स्थितो देहे तावन्मृत्युभयं कुतः ।
यावद् बद्धा नभोमुद्रा तावद् बिन्दुर्न गच्छति ॥
( तत्रैव—४१।१४६ )

'उड्डीयानमुद्रायाः साधना यद्यपि कठिना, तथापि महत्फलदा । उड्डीयान-बन्धस्य स्वरूपमित्थम्—पश्चिमं तानं हस्ताग्राभ्यां मध्ये धृत्वा प्रसारितस्य पादद्वयस्य मध्यं यथा भवति तथा जठरे नाभेरूर्ध्वं च धारयेदिति । एष एव उड्डीयबन्धो निगद्यते । 'हठयोगप्रदीपिकायाम्' अमुमुड्डीयानबन्धं 'मृत्युमातङ्गकेसरीति' निगदितवान् ।

काशीखण्डेऽपि—

जठरे पश्चिमं तानं नाभेरूर्ध्वं च धारयेत् ।
उड्डीयानो ह्ययं बन्धो मृत्योरपि भयं त्यजेत् ॥
( ४१।१४८ )

---

१. योनिं वामाङ्घ्रिणाऽऽपीड्य कृत्वा वक्षःस्थले हनुम् ।
हस्ताभ्यां प्रसृतं पादं धारयेद्दक्षिणं चिरम् ॥
प्राणेन कुक्षिमापूर्य चिरं संरेचयेच्छनैः ।
एषा प्रोक्ता 'महामुद्रा' महाघौघविनाशिनी ॥ ( का० ख० ४१।१३८–१३९ )

जालन्धरबन्धे च कण्ठदेशे शिराजालं ( नाडीजालमित्यर्थः ) धारयेत्, येनाधोगामि नभोजलं धृतं भवेत् । एष बन्धो हि दुःखौघनाशनं प्रोक्तम् । एतेन चन्द्रस्थानीयात् स्थलात् पीयूषं नाग्नौ पतति, न च वायुः प्रधावति[१] । मूलबन्धे च—पार्ष्णिभागेन योनिं सम्पीड्य गुदस्थानं च सङ्कुच्यापानवायुमूर्ध्वमाकृष्य प्राणेन सह धारणेन मूलबन्धो भवति । एतेनापानप्राणयोरैक्येन वृद्धोऽपि युवा भवति[२] ।

प्राणापानवाय्वोर्वशीभूतो जीव ऊर्ध्वाधः परिधावन् वामदक्षिणमार्गेण चञ्चलतामवाप्य स्थितिं न लभते; परन्तु प्राणायामरूपरज्जुबद्धो जीव आकृष्यते । यतो हि अमू प्राणापानावन्योन्यमाकर्षयतः; परन्तु योगी हि ऊर्ध्वाधः संस्थितावेतौ एकत्र संयोज्य स्थिरीकरोति । जीवो हि हकाररूपेणाकाशबीजेनाथवा पुरुषबीजेन बहिर्गच्छति ततश्च सकारेण प्रकृतिबीजेनान्तर्विशति । इत्थं च योगी 'हंसो हंस' इति मन्त्रं षट्शताधिकैकविंशतिसहस्रवारं नित्यं जपति । एषा एव 'योगिनामजपा गायत्री' मोक्षदायिनी तथा चास्याः सङ्कल्पमात्रेण नरो नूनं सर्वाघौघैर्विमुच्यते[३] ।

योगाभ्यासरतानां मार्गे बहव आकर्षणरूपा लौकिकचमत्कारकारिणोऽन्तरायाः समागच्छन्ति, यथा हि स दूरस्थां वार्तां शृणोति, दूरगतं वस्तु पश्यति, निमिषार्धेन शतयोजनगमनशक्तिं प्राप्नोतीत्यादीनि । अचिन्तितशास्त्रकण्ठवाही स भवति । मन्ये,

---

१. बध्नाति हि शिराजालमधोगामि नभोजलम् ।
एष जालन्धरो बन्धः कण्ठे दुःखौघनाशनः ॥
जालन्धरे कृते बन्धे कण्ठसङ्कोचलक्षणे ।
न पीयूषं पतत्यग्नौ न च वायुः प्रधावति ॥ (का० ख०—४१।१४९–१५० )

२. पार्ष्णिभागेन सम्पीड्य योनिमाकुञ्चयेद् गुदम् ।
अपानमूर्ध्वमाकृष्य मूलबन्धो विधीयते ॥
अपानप्राणयोरैक्ये क्षयो मूत्रपुरीषयोः ।
युवा भवति वृद्धोऽपि सततं मूलबन्धनात् ॥ ( तत्रैव—४१।१५१–१५२ )

३. अजपां गायत्रीं 'हंसो हंस' इतिरूपां विवृणोति—
हकारेण बहिर्याति सकारेण विशेत्पुनः ।
हंसहंसेत्यतो मन्त्रं जीवो जपति सर्वदा ॥ ( २१६०० वारमिति शेषः )
अजपा नाम गायत्री योगिनां मोक्षदायिनी ।
अस्याः सङ्कल्पमात्रेण नरः पापैः प्रमुच्यते ॥ ( तत्रैव—४१।१५६–१५८ )

इमा अलौकिकाः शक्तयो यद्यपि योगसंसिद्धिसूचकास्तथापि ते प्रलोभनरूपा योगान्तराया एव। यदा योगी इमाः सिद्धीरुपेक्ष्य योगसंलग्न एव तिष्ठति, तदैव दुर्लभं पदमवाप्नोति। अन्यथाऽभिः सिद्धिभिर्विचालितो योगी आस्वेव निगडितो योगस्योच्चपदवीं नाप्नोति—

यद्येभिरन्तरायैर्न क्षिप्यतेऽस्येह मानसम्।
तदग्रे तत्समाप्नोति पदं ब्रह्मादि दुर्लभम्॥
( का० ख० ४१।१६४ )

पुनरपि—

यत्प्राप्य न निवर्तेत यत्प्राप्य न च शोचति।
तल्लभ्यते षडङ्गेन योगेन कलशोद्भव॥
( तत्रैव—४१।१६५ )

### मोक्षोपायपरः काश्यां तनुत्यागः

पूर्वोक्तप्रकारेण योगाभ्यासेन मोक्षसिद्धिं विवृत्य षाण्मातुरो हि कुम्भोद्भवं प्रब्रूत उपायेनान्येन मोक्षप्राप्तिम्। योगसिद्धिस्त्वनेकजन्माभ्याससाध्योऽतिकठिनो मार्गो मोक्षपदगमनस्य। अपरश्चोपायो महोदयपदप्रदो मार्गः काश्यां तनुत्यागः, यत्र काश्यामविमुक्तेश्वरलिङ्गरूपेण दयासागरः करुणावरुणालयो गङ्गाधरः शिवोऽस्ति। इह काश्या सह स्वदेहसंयोग एव योगः। मोक्षप्राप्त्यै काश्यां देहत्यागः क्षिप्रोपायः। अत्रत्यो षडङ्गो योगः —

विश्वेश्वरो विशालाक्षी द्युनदी कालभैरवः।
श्रीमान् ढुण्ढिर्दण्डपाणिः षडङ्गो योग एष वै॥

एतत् षडङ्गं यो योगं नित्यं काश्यां निषेवते।
सम्प्राप्य योगनिद्रां स दीर्घाममृतमश्नुते॥
( तत्रैव—४१।१७२-१७३ )

पुनरपि—

ओङ्कारः कृत्तिवासाश्च केदारश्च त्रिविष्टपः।
वीरेश्वरोऽथ विश्वेशः षडङ्गोऽयमिहाऽपरः॥
पादोदकासिसम्भेदज्ञानोदमणिकर्णिकाः।
षडङ्गोऽयं महायोगो ब्रह्मधर्मह्रदावपि॥
( तत्रैव—४१।१७४-१७५ )

वरुणासङ्गमासिसङ्गम–ज्ञानवापी–मणिकर्णिका–ब्रह्मकुण्ड–धर्मह्रदाः ( पञ्चगङ्गाः ) इति भावः।

वाराणस्यां षडङ्गसेवनपरस्य जन्तोर्न जातु पुनर्जननीजठरे जन्म। नित्यगङ्गास्नानरूप–'महामुद्राया' महापातकविनाशिन्या अभ्यासेन काशीवासी अमृतत्वमवाप्नोति। काशीवीथीषु सञ्चारो हि मन्ये, इह 'खेचरीमुद्रा'। एतया देवत्वं लभते। सर्वेभ्यो देशेभ्योऽत्रोड्डीय आगमनमेवेह वाराणस्या उड्डीयानबन्धः। अयं हि बन्धो मोक्षलाभाय सम्पद्यते। विश्वेश्वरस्नानजलं शिरसि धारणं नूनं 'जालन्धरो' बन्धः। सत्यपि शताधिके विघ्ने येन काशी न त्यज्यते, स एव सर्वदुःखदाहको 'मूलबन्धः' स्मृतः। अतः पुरतः स्कन्दो वदति कुम्भजं प्रति—

इति योगः समाख्यातो मया ते द्विविधो मुने।
सषडङ्गः समुद्रश्च मुक्तये शम्भुभाषितः॥
( का० ख० ४१।१८२ )

यावद्धि देहो समर्थो व्याधिहीनो भवेत्, तावद्द्विविधयोगाभ्याससमयः। उभयोश्च योगयोर्मध्ये काशीयोगो हि नामोत्तमो योगः। तं समभ्यस्य मुक्तिं लभेत। आधि-व्याध्युपाधिसहिता जरा किल मृत्युलक्षणा। तां विज्ञाय काशीनाथसमाश्रयणेन मृत्युभयं न जायते, नरश्च मोक्षं लभते। यतः काश्यां मुक्तिदायां पुर्यां मरणमपि मङ्गलम्। अत्र चातिथ्यागमनवन्मृत्योरागमनं सुप्रतीक्ष्यम्। अतो हि—

कलिः कालः कृतं कर्म त्रिकण्टकमितीरितम्।
एतत्त्रयं न प्रभवेदानन्दवनवासिनाम्॥
अन्यत्राऽर्तकितः कालः कलयिष्यत्यसंशयम्।
कालादभयमिच्छेच्चेत्ततः काशीं समाश्रयेत्।
( तत्रैव—४१।१८८–१८९ )

एतस्याध्यायस्य विवेचनमत्र किञ्चिद्विस्तरेण कृतम्। तत्र कारणे वर्त्तेते—

(१) अत्र योगस्य षडङ्गस्य मुद्राबन्धजुष्टस्याभ्यासविधिः शास्त्रसम्मतः संक्षेपेण परन्तु सुस्पष्टं सम्यङ् निगदितः।

(२) द्वितोयो हेतुश्च—एतस्या मोक्षदायाः पुर्याः कृते यः षडङ्गो योगो मुद्राबन्धादिसम्पृक्तो निगदितस्तमाचरन् काशीवासी योगी मरणादेव शिवज्ञानोपदेशान्मुक्तिं लभते। सर्वमेतदित्थं मङ्गलमयम्।

**द्विचत्वारिंशाध्यायपर्यालोचनम् —**

**कालवञ्चनोपायवर्णनम्**[1]

अत्र हि द्विचत्वारिंशेऽध्याये पूर्वार्द्धे काशीखण्डे निकटागतस्य कालस्य चिह्नानि प्रथमतः सूच्यन्ते। अगस्त्यस्य परिप्रश्नोत्तररूपेण हरनन्दनो वदति बहूनि निकटागतकाललक्षणानि। तेषु द्वित्रा एवात्र लिख्यन्ते—

(१) यस्य केवलं दक्षिणनासापुट एव सदाऽहर्निशं श्वासवायुर्वाति, स पूर्णायुष्योऽपि पुरुषस्त्रयाब्देनावश्यं मृत्युं भजते।

(२) यस्य नासापुटयुगे श्वासवायुर्दशाहानि निरन्तरं वातश्चेत्, वायुश्च सहसंक्रान्तिमयो भवेत्, तदा सहसंक्रान्तिश्वासवायुवान् नरो दिनत्रयमेव जीवेत्।

(३) **यस्य बीजं मलं मूत्रं क्षुतं मूत्रं मलं तु वा।**
**इहैकदा पतेद्यस्य अब्दं तस्यायुरिष्यते॥**

( का० ख० ४२।१० )

अन्यान्यपि लक्षणानि प्रोक्तानि। यथा—

**अरुन्धतीं ध्रुवं चैव विष्णोस्त्रीणि पदानि च।**
**आसन्नमृत्युर्नो पश्येच्चतुर्थं मातृमण्डलम्॥**
**अरुन्धती भवेज्जिह्वा ध्रुवो नासाग्रमुच्यते।**
**विष्णोः पदानि भ्रूमध्ये नेत्रयोर्मातृमण्डलम्॥**

( तत्रैव—४२।१३–१४ )

इतराण्यपि लक्षणानि प्रोक्तानीह। यथा—

**वेत्ति नीलादिवर्णस्य कट्वम्लादिरसस्य हि।**
**अकस्मादन्यथाभावं षण्मासेन स मृत्युभाक्॥**

( तत्रैव—४२।१५ )

यस्य रेतः करनखनेत्रान्तानि च नीलिमानं भजते, स जन्तुः षण्मासाभ्यन्तरे यमातिथिर्भवति। एवं क्रमेण एकोनचत्वारिंशपद्यपर्यन्तं बहूनि चिह्नानि मृत्योरागमनस्य प्रोक्तानि। अन्ते च निगदितम्—

---

१. अस्याध्यायस्य शीर्षकं कालवञ्चनोपायवर्णनम्। तात्पर्यमित्थं यदत्र यौ द्वौ उपायौ चत्वारिंशे पद्ये निर्दिष्टौ, ताभ्यामेव कालवञ्चनमिहोक्तम्। वञ्चनशब्दोऽत्र हिन्दीभाषायां 'बचना'पदेन योऽर्थो भवति, तस्य द्योतकः। अर्थादुपायैः कालजन्यभयान्मुक्तिर्मृत्युसम्बन्धिभयस्य वञ्चनं सम्भवतीत्याशयः। वञ्चकः किल छलयिताऽपि।

एतानि कालचिह्नानि सन्त्यन्यानि बहून्यपि ।
ज्ञात्वाऽभ्यसेन्नरो योगमथवा काशिकां श्रयेत् ॥

( का० ख० ४२।४० )

पूर्वपद्येषूक्तानि कालचिह्नानि सन्ति । तानि पूर्वमेव ज्ञात्वा मृत्युभय-निवृत्तयेऽमरत्वरूपमोक्षप्राप्त्यै हीह द्वावुपायौ निगदितौ । एकस्तु योगोऽन्यश्च काशी-पुर्या मोक्षदाया आश्रयणम् । तत्र द्वितीयोपायस्येह श्रेष्ठत्वं सूचितम् । मृत्युञ्जयं काशीनाथं विना नान्यः कश्चनोपायो येन जरामरणजन्मभयनाशको मोक्षः सुलभः । यथा हि—

तावद् गर्जन्ति पापानि तावद् गर्जेद्यमो नृपः ।
यावद्विश्वेशशरणं नरो न निरतो व्रजेत् ॥

( तत्रैव—४२।४२ )

इह विश्वेशशरणपदेन काश्यां स्थितस्याविमुक्तेश्वरशिवस्य काश्याश्च शरणगमनमभिप्रेतम् ।

प्राप्तविश्वेश्वरावासः पीतोत्तरवहापयाः ।
स्पृष्टविश्वेशसल्लिङ्गः कश्च याति न वन्द्यताम् ॥
करिष्येत् कुपितः कालः किं काशीवासिनां नृणाम् ।
काले शिवः स्वयं कर्णे यत्र मन्त्रोपदेशकः ॥

( तत्रैव—४२।४३-४४ )

काशीवासस्य कालोऽपि सूचितः —

यावन्न हि जराक्रान्तिर्यावन्नेन्द्रियवैक्लवम् ।
तावत्सर्वं फल्गुरूपं हित्वा काशीं श्रयेत् सुधीः ॥

( तत्रैव—४२।४६ )

यद्यपि वहूनि मृत्युवेलासामीप्यसूचकानि लक्षणानि सन्ति, तथापि जरावस्था नूनं प्रथमस्थानीयं लक्ष्म । हृतवैभवपुरुष इव हृततारुण्यमाणिक्यो भवति लोकः । सुतादयो वाक्यमाज्ञां न शृण्वन्ति, पत्नी चापि स्नेहं मुञ्चति, वान्धवा नैव मन्यन्ते, यदा हि जरादोषग्रस्तो मनुजो जायते । प्रणयिनी कामिनी खल्वपि पराङ्मुखी भवति । इह मर्त्यलोके नेतरः कश्चन व्याधिः जराकल्पो नो दुःखं जरया समम् । अवहेलनाकार-यित्री जरा नूनं नृणां मरणमेव । कालस्य जयार्थं हि सर्वश्रेष्ठ उपायः काशीवासः । स समाश्रयणीयः; किन्तु काशीप्राप्तिरपि यज्ञदानव्रतजपादिपुण्यैः साध्या । यतो हि—

काशीप्राप्तिरयं योगः काशीप्राप्तिरिदं तपः ।
काशीप्राप्तिरिदं दानं काशीप्राप्तिः शिवैकता ॥

( तत्रैव—४२।५४ )

यदि काशी समाश्रिता, तदा कलेः कालस्य जराया दुष्कृतानामन्तरायाणां च न किमपि भयमस्ति । पुनश्च—

काशी समाश्रिता यैश्च यैश्च विश्वेश्वरोऽर्चितः ।
तारकं ज्ञानमासाद्य ते मुक्ताः कर्मपाशतः ॥
( का० ख० ४२।५७ )

अतः सर्वैर्मोक्षार्थिभिः काशीविश्वेश्वरौ सेवनीयौ ।

## त्रिचत्वारिंशाध्यायपर्यालोचनम्—

### दिवोदासप्रतापवर्णनम्

पूर्वं सूचितं यत् चारुकन्दरं मन्दराचलं स्थितोऽपि भवानीशो भगवानीशो दिवोदासपालितां काशीं विहाय रतिं न लेभे । अत्र कुम्भयोनेर्जिज्ञासां ज्ञात्वा भवानीसुतः स्कन्दो राज्ञो दिवोदासस्य काशीशासनं तस्य प्रतापस्य वर्णनं प्रस्तौति । स ब्रूते—

"ब्रह्मणोऽभ्यर्थनामर्थयन्, मन्दरस्य तपांसि सफलीकुर्वन् लोकशङ्करः शङ्करो यदा स्वप्रियां पुरीं काशीं विहाय मन्दराचलं गतवान्, यदा च सर्वे देवगणाः सेन्द्रा वरुणप्रभृतयोऽपि नाकं गतवन्तस्तदा देवदासो पृथिव्या एकच्छत्रो राजा भूत्वा पृथिवीं विधिना शशास । सर्वेषां सतां धनदः सन् स राजराज एव ( साक्षात्कुबेर एव ) बभूव" ।

अत्र पुराणे भावरसालङ्कारजुष्टैर्बहुभिः पद्यैस्तस्य सम्राजो दिवोदासस्य शासनप्रशंसा वर्णिता । उदाहरणरूपेण कानिचन छन्दांस्युद्ध्रियन्ते—

अगर्वानिव गन्धर्वान् यश्चक्रे निजगीतिभिः ।
ररक्षुर्यक्षरक्षांसि तद्दुर्गं स्वर्गसोदरम् ॥
नागानागांसि चक्रुश्च तस्य नागबलीयसः ।
दनुजा मनुजाकारं कृत्वा तं च सिषेविरे ॥
जाता गुह्यचरा यस्य गुह्यकाः परितो नृषु ।
संसेविष्यामहे राजन्नसुरास्त्वं स्ववैभवैः ॥
वयं यतस्त्वद्विषये सुरावासोऽपि दुर्लभः ।
अशिक्षयत् क्षितिपतेरिह यस्य तुरङ्गमान् ॥
आशुगश्चाशुगामित्वं पावमाने पथि स्थितः ॥
( तत्रैव—४३।१८-२१ )

श्लेषपुष्टस्य साङ्गरूपकस्य वर्णनस्यैकं चारुतरमुदाहरणमवलोक्यम्—

अगजान्यस्य तु गजान्नगवर्ष्मसु वर्ष्मणः।
अजस्रदानिनो दृष्ट्वा भवन्नन्येऽपि दानिनः॥
सदोजिरे च बोद्धारो योद्धारश्चरणाजिरे।
न यस्य शास्त्रैर्विजिता न शस्त्रैः केनचित्क्वचित्॥
( का० ख० ४३।२२-२३ )

इत्थं च त्रयस्त्रिंशश्लोकपर्यन्तं सालङ्कारं प्रशंसोद्गारमध्यायेऽस्मिन् दिवोदासस्य शासनविषये वर्णितवान् पुराणकारः।

एवं महीं शासतो दिवोदासस्य शरदामयुताष्टकं दिनैकमिव व्यतीतम्। तदनन्तरं धर्मानुगामिनं दिवोदासनृपतिं प्रति विप्रकारकरणसक्तमनसो विबुधा देवगुरुणा बृहस्पतिना सह मन्त्रयाञ्चक्रुर्यत् कैरुपायैरेनं राजानं वयमधर्ममार्गगामिनं कुर्मः ? यतो हि यज्ञभुजो देवा एतस्य दुर्धराध्वरैरपि यज्ञाहुतिभुजोऽपि सौहृद्यं नालभेरन्। द्युसदां परोत्कर्षासहिष्णुत्वं स्वभाव एव। बलि-बाणासुरादयोऽनपराद्धा अप्येतेषां सौहृद्यं नाप्राप्नुवन्। षाड्गुण्यवेदिनस्तस्य क्षितिपतेः क्षितिमण्डलं शासति कुतोऽपि कथमपि चाधर्मस्पर्शो नाभूत्।

तस्मिन् महीं शासति सर्वाः प्रजाः, सर्वे वर्णाः, सर्वे तपस्विनः, सर्वाश्रमिणादयश्च यथाधर्ममेवाचरन्। ब्रह्मचारिणोऽविप्लुतब्रह्मचर्या गृहिणोऽप्यातिथ्यादिपूर्वोक्तगृहस्थधर्मपरायणाः। तृतीय-चतुर्थाश्रमिणो नूनं स्व-स्वाचारधर्मलग्नाः स्युः। तस्य राष्ट्रे न कोऽप्यनपत्यः, न कश्चिदपि जनो धनहीनो न कश्चनावृद्धसेवक आसीत्।

न चाटा नैव वाचाटा वञ्चका नो न हिंसकाः।
न पाषण्डा न वै भण्डा न रण्डा न च शौण्डिकाः॥
श्रुतिघोषो हि सर्वत्र शास्त्रवादः पदे पदे।
सर्वत्र सुभगालापा मुदा मङ्गलगीतयः॥
( तत्रैव—५३।५४ )

पुत्राः पित्रादिगुर्वादिपादपूजकाः, पत्न्यश्च पतिपादपूजनजुष्टाः पतिपरायणाः किं बहुना, सर्वे लोका लोकधर्मपालनसंसक्तमनसः सविधिस्व-स्वाचारशीला बभूवुः। त्रिकालं काशिदेवता वरिवस्यन्ति स्म, विद्वांसः समर्च्यन्ते स्म।

तदा सर्वाः प्रजा आदरणीयानां विद्वत्प्रभृतीनां समादरं कुर्युः। स्थाने-स्थाने सविधि यज्ञा भवन्ति स्म। पदे पदे वापी-कूपतडागारामादीनां निर्माणानि बभूवुः। सर्वे लोकास्तत्र सन्तुष्टा आसन्। इत्थं च तस्य महीजानेः शुचिवर्त्तिनो राज्यशासनेऽन्वेषणेनाऽपि देवा मनागपि छिद्रं न लेभिरे।

एतत्सर्वं सर्वगुणसम्पन्नं दिवोदासशासनं दर्शं दर्शं गुरुर्देवान्प्रति प्रोक्तवान्— "राजायं सन्धिविग्रहादीनां परमो ज्ञाता। अतोऽत्रास्ति भेदोपाय एको मार्गो येनास्य शासने छिद्रं भविष्यति। अन्यथा धर्माचरणे नास्ति कोऽपि छिद्रो न वा प्रजाशासने काचित्त्रुटिर्दृश्यते। शत्रुशोधनादिकमपि नूनं निर्दोषमतो भेदस्यैवाधारो हि समाश्रयणीयः"। पुनश्च देवगुरुः प्रोक्तवान् यद् यद्यपि तेन भूपतिना भूर्लोकाद्विवासितास्तथापि तत्रास्मत्पक्षपातिनो भूरिशः सन्ति—

कालो निमिषमात्रोऽपि यान् विना न सुखं व्रजेत्।
अस्माकमपि तस्यापि सन्ति ते तत्र मानिताः॥

अन्तर्बहिश्चरा नित्यं सर्वविश्रम्भभूमयः।
समागतेषु तेष्वत्र सर्वं न सेत्स्यति प्रियम्॥
( का० ख० ४३।७०–७१ )

गीष्पतीरितं श्रुत्वा सर्वे देवा देवेन्द्रं गत्वा, देवगुरोः कथनं श्रावयित्वा तदनुकूलं कार्यकरणाय प्रार्थितवन्तः। शचीपतिश्च हव्यावाहनं कृत्वा भूयिष्ठं वह्निं बहुमानसहितं न्यवेदयद्यत्तस्याग्नेर्या मूर्तिर्भुवि तिष्ठति, तामग्निरुपसंहरतु। तथाकृते विनष्टवह्नयः सर्वाः प्रजा हव्य-कव्य-क्रियाशून्या भविष्यन्ति, राजानं दिवोदासं प्रति च विरक्ता भविष्यन्ति। तदा राज्ञः प्रकृतिरञ्जनत्वं विलुप्यति। ततश्च कोश-दुर्ग-सैन्य-बलादिभिः समृद्धोऽपि निर्बलो भविष्यति। त्रिवर्गक्षयेण लोकद्वयात्मिका गतिरपि नूनमसमर्था भविष्यति।

एवम्प्रकारेण सुरपतेर्निवेदनं समाकर्ण्य वह्निर्योगमायाबलेनात्मनः सर्वा मूर्तीः— आहवनीय-गार्हपत्य-दाक्षिणाग्नि-जाठराग्नि-प्रभृतीः -- क्षितिमण्डलात्समाचकर्ष। एवम्भूतायां दुर्दशायां दिवोदासो यदा मध्याह्नवेलायां भोज्यमण्डपं प्राविशत्, तदा सूपकारास्तं याचन्तोऽभयं निवेदयामासुः —

न जानीमो वयं नाथ त्वत्प्रतापभयार्दितः।
कुसृत्याऽथ कयाविद्वान्नष्टो वैश्वानरः पुरात्॥
कृशानौ कृशतां प्राप्ते कथं पाकक्रिया भवेत्।
तथापि सूर्यपाकेन सिद्धा पक्तिर्हि काचन॥
( तत्रैव – ४३।८८–८९ )

सूपकाराः पुनरूचुः —'प्रभोर्यदि आज्ञा तर्हि इहैव सा पक्तिर्वयमानयामः। मन्यामहे यदद्यतनी पक्तिः किल शुभाऽस्ति'। अन्धसिकवाक्यं ( पाककर्तॄणां वचनं ) समाकर्ण्य सर्वं तद्देवैः कृतमित्यजानात्। निजतपोबलेन क्षितिमण्डलात्सर्वविधस्याग्नेर्गमनं विज्ञायते स्म। सोऽचिन्तयच्च—"ब्रह्मणः प्रार्थनया प्राप्तस्य क्षोणीमण्डलस्य

राज्यस्य दुर्दशा नूनं देवतानामेव हानिः" । इत्थं विचारयति तस्मिन् पौराः सजानपदा द्वारदेशे समुपस्थिता दौवारिकै राज्ञः समक्षमानीताः । समुदाचारानन्तरं ते यथायोग्यमुपवेशिता आसन् ।

तेषां चिन्ताग्रस्तमुखविलोकनमात्रेण तेषां समग्राशयविज्ञाता दिवोदासः प्रोवाच यदधुना घटितं तत्सर्वं चिरान्मे वाञ्छितम्; परन्तु समुपेक्षितमभवत् । अधुना देवैस्तत् स्मारितमनुकूलमेव । अहं खलु देवानां पराभवसिद्ध्यै यदावश्यकं तत्सर्वं स्वतपोबलेन सम्पादयिष्यामि—

गतोऽनलोऽभवद्भद्रं जगत्प्राणोऽपि यात्वितः ।
वरुणः पुष्पवन्ताभ्यामविलम्बं प्रयात्वितः ॥

अहमेव हि पर्जन्यो भविष्यामि तपोबलात् ।
मुदे जनपदानां च सर्वसस्यसमृद्धिदः ॥

( का० ख० ४३।१०३–१०४ )

अहमेव योगबलेन सर्वरूपपूर्वोक्तवैश्वानररूपेण पक्तोष्टिव्युष्टिकृत्तमो भविष्यामि । अहमेव वायुदेवस्य रूपमादायाथ च जलमूर्त्तिधारणं कृत्वा प्रजाः पालयिष्यामि । एवमेव च सूर्यचन्द्रादीनामपि सर्वं कार्यं करिष्यामि । अस्मत्कुल एको भास्करो दिनकरो मान्यः ( यतो हि राजाऽयमिक्ष्वाकुकुलोद्भवः ), स सुखेन तिष्ठतु, यातायातं च विदधातु । यतः स एव "सूर्य आत्मा जगतस्तस्थुषश्च" । स कमपि कथमपि कदाऽपि नापकरोति ।

इति नरपतिवाक्सुधारसौघं श्रुतिपुटकैः परिपीय पौरवर्गः ।
विकसितवदनाम्बुजो जगाम निजनिजमालयमाधिमुक्तचित्तः ॥

( तत्रैव—४३।११२ )

इत्थं सर्वे पौराः प्रसन्नमनसः स्व-स्व-वेश्मसु जग्मुः । राजापि स्ववचनान्यनुसरन् तपोबलसम्पत्त्या प्रजां पालयामास ।

## चतुश्चत्वारिंशाध्यायपर्यालोचनम्—

### विश्वेश्वरकाशीविरह-योगिनीगणप्रस्थानवर्णनम्

अग्न्यादीनां दिवोदासतपोबलाविष्कृतानां प्रभावेण काशीप्रजाः सुखसम्पन्ना जाताः । अतश्छिद्रहीनां धरित्रीं स दिवोदासः सुखेन शशास इति हेतोः शिवस्य काशिकागमनावसरो नाभूत् । नीलकण्ठो हि कण्ठस्थेन गरलतापेन न तथा दुःखितोऽभूत्, न वा सर्वाङ्गभूषणीभूतफणिपुञ्जानां विषज्वालामयैः फूत्कारैर्यथा

मन्दरकन्दरोल्लसदसमद्युतिरत्नमन्दिरे निवसन् स काशिवियोगजज्वरेण सन्तप्तोऽभवत्। इहाध्याये स्कन्दवचनमिषेण काशीखण्डकारः, शिवस्य विषमस्य काशिकाविरहजन्यतापस्याथ च तस्य ज्वरस्य निष्फलीभूतानामधिकसन्तापदातॄणामुपायानां वर्णनं चकार।

अयि काशि ! मुदा कदा पुनस्तव लप्स्ये सुखमङ्गसङ्गजम् ।
अतिशीतलितानि येन मेऽद्भुतगात्राणि भवन्ति तत्क्षणात् ॥
अयि काशि ! विनाशिताघसंघे तव विश्लेषज आशुशुक्षणिः ।
अमृतांशुकलामृदुद्रवैरतिचित्रं हविषेव वर्धते ॥

( का० ख० ४४।१७-१८ )

अन्ततश्च गिरिशोऽवदद् यद् दक्षजाविरहदुःखस्तु पार्वतीरूपौषधीं प्राप्य मत्तो जगाम; परन्तु खल्वधुना काशीं गत्वा स्वां पुरीरूपप्रियामाश्वहं प्रेक्षिष्ये। यद्यपि भूतेशः कमपि स्वविरहतापस्य वृत्तान्तं न न्यवेदयत्, तथापि तस्य हृदयवासिनी हिमगिरितनया जगदम्बिका हरस्य सन्तापाभिज्ञा जाता।

साऽपृच्छत् –हे विषभक्षक ! सृष्टिपालनसंहारकर्त्तः ! सर्वसमर्थयोगिराड् ! दुःखसुखादिभिरस्पृष्ट ! हे नीलकण्ठ ! इमे भुजगा भुजभूषणास्त्वां स्वविषेण कदापि न पीडयन्ति। किं तत्कारणं यत्तव वामाङ्कस्था वामा यद्यपि भवतोऽर्द्धाङ्गिनी तथापि एतस्य दुःखस्य कारणेनाऽपरिचिता एवाऽस्मि।

शिवश्च काशीविरहरूपं दुःखकारणं तां सङ्केतेन बोधयामास। बुद्ध्वा च वियोगदुःखदायकमूलं शिवा खलु मुक्तिदां शिवाद्विमुक्तां काशीं पुरीं प्रशंसन्ती तां पुरीं गन्तुं प्रस्तावितवती। अत्रत्यं वचनं वर्णनं च काव्यमयमिति कृत्वा कानिचन छन्दांस्युद्ध्रियन्ते—

गगनतलमिलितसलिले प्रलयेऽपि भवत्रिशूलपरिविधृताम् ।
कृतपुण्डरीकशोभां स्मरहर काशीं पुरीं यावः ॥
धराधरेन्द्रस्य धरातिसुन्दरा न मां तथा स्यापि धुनोति धूर्जटे ।
धरागताऽपीह न या ध्रुवं धरा पुरी धुरीणा तव काशिका यथा ॥
न यत्र काश्यां कलिकालजं भयं न यत्र काश्यां मरणात्पुनर्भवः ।
न यत्र काश्यां कलुषोद्भवं भयं कथं विभो सा नयनातिथिर्भवेत् ॥
किमत्र नो सन्ति पुरः सहस्रशः पदे पदे सर्वसमृद्धिभूमयः ।
परं न काशीसदृशी दृशोः पदं क्वचिद्गता मे भवता शपे शिव ॥

( तत्रैव—४४।२९-३२ )

भावभरितहृदयया हिमगिरितनुजया बहुभिश्छन्दोभिः काश्याः काशीस्थमणिकर्णिकातीर्थादीनां च प्रशंसा कृता यत्सा किमु मणिकर्णिका निर्वाणपदस्य भद्रपीठम्, किमु मोक्षलक्ष्म्या मृदुलं तल्पमथो नु किं वा सा स्थली परमानन्दसुकन्दजन्मभूमिरेवास्ति। यत्र च मरणं मङ्गलम्, यत्र च वपुःपातो महोत्सवः। इत्थं च शैलराजसुता महिमानं काश्या गायन्ती, काशीप्राप्त्यै जटाजूटधरं विज्ञापयामास। प्रोवाच सा--"महादेव! सर्वेश! नित्यस्वाधीनवर्त्तन! यथाऽऽनन्दकाननं यायां तथोपायं हे वरद! भवान् करोतु"।

शिवोऽपि हिमगिरिनन्दिन्याः सुधासीकरकल्पानि वचनानि श्रावं श्रावं तस्याः प्रस्तावं समर्थयन्नुवाच—

त्वं जानासि महादेवि मम यत्तन्महद्व्रतम्।
अभुक्तपूर्वमन्येन वस्तूपाश्नामि नेतरत्॥
(का० ख ०४४।५२)

अधुना नूनं काशी राज्ञा दिवोदासेन दानभोगेन भुज्यते। ततस्तत्र मे कथं गमनम्? पुनः स व्यज्ञापयद यत्पितामहस्य वचनाद्दिवोदासो महाराजो महीं शासति। कथं स धर्मपूर्वकप्रजापालनतत्परः काश्या वियोज्यते—इत्यावाभ्यां विचार्यः प्रश्नः। विना च्छिद्रेण धर्मनिष्ठं राजानं तमुत्सादयितुं नोत्सहे। न जरा तमतिक्रामति, मृत्युरपि न तं जिघांसति, व्याधिबाधाभ्योऽपि स मुक्तोऽतश्छिद्रमन्वेष्यम्।

एवमेव चिन्तापरो यावच्छिवस्तावद्योगिनीमण्डलं स पुरतो व्यलोकयत्। योगिनीचक्रमाहूय हरो जगौ योगिनीमण्डलं प्रति, अर्थयच्च यत्र राजा दिवोदासो धर्मेण धरणीं शासति तत्र योगिन्यो योगमायाबलान्विता यान्तु, तथोपचरन्तु यथा शिवस्तत्र गन्तुं प्रभवेत्।

ताश्चन्द्रशेखरं शिरसाऽभिवाद्य मनसोऽप्यतिरंहसाऽऽकाशमार्गेण ययुः। शिवाज्ञां प्राप्य, तत्पूर्त्यै परममुदिताः परस्परं संलपन्त्यः प्रशंसन्त्यश्चात्मानं काशीदर्शनलोभेन काशीं समाजग्मुः। यथा च--

इति मुदितमनाः स योगिनीनां निकुरम्बस्त्वथ मन्दराद्रिकुञ्जात्।
नभसि लघूकृतप्रयाणवेगो नयनातिथ्यमलम्भयत पुरीं ताम्॥
(तत्रैव—४४।६८)

**पञ्चचत्वारिंशाध्यायपर्यालोचनम्—**

अध्यायेऽस्मिन् योगिनीवृन्दस्य काशीमागमनं प्रवेशश्च वर्णितः। ताश्च योगिन्यो दूरत एव तत्क्षेत्रं दर्शयामासुः। सा च काशी ता आह्वयतीव निजनगरशोभया प्रतिभाति —

दिव्यप्रासादमालानां पताकाश्चलपल्लवाः।
सादरं दूरमार्गस्थान् पान्थानाह्वयतीरिव॥
चञ्चत्प्रासादमाणिक्यैर्विजृम्भितमरीचिभिः।
सुनीलमपि च व्योम वीक्ष्यमाणं सुनिर्मलम्॥

( का० ख० ४५।२–३ )

ताश्च योगिन्यो निजं वेषभूषादिकं विहाय कार्पटिकतपस्विप्रभृतीनां रूपाणि मायया गृहीत्वा पृथक्-पृथक् तां नगरीं प्रविविशुः। पञ्चमपद्यादारभ्येहाध्याये विविधवेषधारिणीनां योगिनीनां स्वरूपाणि—'काचिद्योगिनी, काचिच्च तपस्विनी, काचिच्च मालाकारवधूः, काचिन्नापितसुन्दरी, काचिच्च भैषज्यकोविदेत्यादि'— कथितानि।

विविधवेषभाषाधरा योगिन्यः प्रतिगृहं प्रत्यङ्गणं प्रविशन्त्यो वर्षपर्यन्तं चरन्त्योऽहर्निशं तस्य दिवोदासस्य पुर्यां क्वापि छिद्रं न लेभिरे। ततस्ता असफलमनोरथाः सर्वा एकत्र समेत्य सम्मन्त्र्य च तस्यां पुर्यामिव स्थायिरूपेण तस्थुर्मन्दराचलं हि न जग्मुः। यतो हि योगिनीप्रभोर्भगवतः शङ्करस्य कार्यमनिष्पाद्य शङ्करस्य पुरो गन्तुं न शक्नुयुः। ताः प्रति काशी नूनमेतादृशी रुचिराऽभवद्यच्छिवसेवाधर्मत्यागो हि तासां कृते सुकरोऽभवत्, काशीत्यागस्तु तासां कृते परमदुष्करो जातः। यतो हि नूनम्—

प्रभू रुष्टोऽपि सद्भृत्ये जीविकामात्रहारकः।
काशी हरेत् कराद्भ्रष्टा पुरुषार्थचतुष्टयम्॥

( तत्रैव—४५।२२ )

तदा प्रभृति चरन्त्योऽप्यन्यत्र योगिन्यो वाराणस्यामेव तिष्ठन्ति। यतः खलु —

प्राप्यापि श्रीमतीं काशीं यस्तितिक्षति दुर्मतिः।
स एव प्रत्युत त्यक्तो धर्मकामार्थमुक्तिभिः॥

( तत्रैव—४५।२४ )

पुनरपि चात्र पुराणे काशीप्रशंसा वर्ण्यते चतुर्भिः पद्यैः—

कः काशीं प्राप्य दुर्बुद्धिरपरत्र यियासति।
मोक्षनिक्षेपकलशीं तुच्छश्रीकृतमानसः॥

विमुखोऽपीश्वरोऽस्माकं काशीसेवनपुण्यतः।
सम्मुखो भविता पुण्यं कृतकृत्याः स्म तद् वयम्॥
दिनैः कतिपयैरेव सर्वज्ञोऽपि समेष्यति।
विना काशीं न रमते यतोऽन्यत्र त्रिलोचनः॥
शम्भोः शक्तिरियं काशी काचित्सर्वैरगोचरा।
शम्भुरेव हि जानीयादेतस्याः परमं सुखम्॥
(का० ख० ४५।२५-२८)

इत्थं विचारयन्त्यो योगिन्यो मायावृताः स्थायिरूपेण काश्यां तस्थुः।

एतदनन्तरं काश्यां योगिनीनां भजनात् किं फलं भवति, कानि च तासां नामानीति जिज्ञासायां (१) गजाननेत्यारभ्य (६४) मृगलोचनापर्यन्तं चतुःषष्टिसंख्यकानि तासां नामधेयानि निगदितानि। इदमपि सूचितम्—

नामानीमानि यो मर्त्यः चतुःषष्टिं दिने दिने।
जपेत्त्रिसन्ध्यं तस्येह दुष्टबाधा प्रशाम्यति॥
(तत्रैव—४५।४२)

त्रिभिः पद्यैश्चतुःषष्टियोगिनीनाम्नां पाठस्य फलश्रुतिमुक्त्वैतदपि सूचितं यच्चतुःषष्टिरूपयोगिनोमन्दिरपीठे (चौसट्ठीघट्टस्थे चौसट्ठीदेव्या मन्दिरे) विधिविधानपूर्वकमन्येषामपि मन्त्राणां जपो हि वर्णितफलदायकः। यतो हीदं सिद्धपीठम्। सर्वमेवानुष्ठानं सविधि मनोरथपूरकम्

अमुष्मिन् सन्दर्भे शारदनवरात्रदिनेषु नवमीपर्यन्तं कृतस्य कस्यचिदप्यनुष्ठानस्य महिमा वर्णयितुं न पार्यते। एतेनानुष्ठानेन चिन्तितमनोरथस्य सिद्धिरवश्यम्भाविनी। कृष्णपक्षचतुर्दश्यामपि निशि वर्णितविधिकृतानुष्ठानस्यापूर्वं फलं भवति। तदा रात्रिजागरणं चापि कार्यम्। चैत्रकृष्णप्रतिपदि (होलीदिवसे) तत्रावश्यं महाफलदायियात्रादर्शने करणीये। अद्याऽपि होलीधूलिकोत्सव-(धुरड्डीदिने)दर्शनार्थं यात्रोत्सवः सम्पद्यते। वाराणसेया जनास्तत्र प्रतिवर्षं तद्दिने गच्छन्ति चतुःषष्ट्या देव्याश्चाबीरगुलालादिभिः पूजनं कुर्वन्ति। तत्र महान् जनसम्मर्दो भवतीत्यलं बहुवर्णनेन।

## षट्चत्वारिंशाध्यायपर्यालोचनम्—

### लोलार्ककथा तस्य दर्शनपूजनमाहात्म्यं च

योगिनीवृन्दे काशीं गते, व्यतीते च बहुतिथे काले काञ्चन वार्तां तत्रत्यामलभमानो बालेन्दुभूषणो जगद्भूषणं सप्ताश्वमंशुमालिनं काशीं प्राहिणोत्, आज्ञप्तश्च स यद् राज्ञो दिवोदासस्यावमाननामकुर्वता तेन रविणा तथा स्थितिर्विधेया यथा तस्य शासनं धर्मविरोधि भवेत्; परन्तु धर्ममार्गप्रवृत्तस्य दिवोदासस्यावमानना कथमपि न कार्या। यतो हि तन्महत्पातकजनकं भविष्यति । गङ्गाधरस्तं दिवाकरमाज्ञापयत्—यदि तव बुद्धिबलेन दिवोदासो धर्मच्युतो भवेत्, तदा त्वयाऽसह्यैः स्वमयूखैः सा पुरी समुद्वास्या। स नृपतिरेतादृशो धर्मचारी यत्—

कामक्रोधौ लोभमोहौ मत्सराहङ्कृती अपि।
ते तत्र न भवेतां यत्तत्कालोऽपि न तं जयेत् ॥
यावद्धर्मे स्थिरा बुद्धिर्यावद्धर्मे स्थिरं मनः।
तावद्विघ्नोदयः क्वास्ति विपद्यपि रवे नृषु ॥

( का० ख० ४६।६-७ )

अतः सर्वजन्तुविचेष्टितविज्ञं ब्रध्नं खण्डपरशुः कार्यसिद्ध्यै प्रैषयद्वाराणसीम्। रविरपि शिवाज्ञां पालयन्नन्यां मूर्त्तिं विदधत्, काशीदर्शनलालसां प्रतिक्षणं वर्द्धयन्, चञ्चलेन मनसा नभःपथमनुसरन् स्वीयां गतिमतीव त्वरयन् काशीं समवाप। ततश्च प्रच्छन्नरूपधारी सहस्ररश्मिरन्तर्बहिश्चरन्, नानारूपमाश्रयन्, काशीं वसन्, बहुप्रयतमानोऽपि तस्य शासने राज्ञ आचरणे वा च्छिद्रमेकमपि न प्राप्तवान्। एवञ्च वत्सरमेकं निवसन्नेकदा तं राजानं कञ्चन दुर्लभं पदार्थमयाचत।

कदाचिद्याचको जातो बहुदोऽपि कदाप्यभूत्।
कदाचिद्दीनतां प्राप्तः कदाचिद् गणकोऽप्यभूत् ॥
वेदबाह्यां क्रियां चापि कदाचित्प्रत्यपादयत्।
कदाचित्स्थापयामास दृष्टप्रत्ययमैहिकम् ॥

( तत्रैव—४६।१५-१६ )

केवलं प्रत्यक्षमेव प्रमाणं प्रमाणमिति वदतां चार्वाकादीनां मतं स्थापयामासेति भावः।

इत्थं च पाखण्डधर्मविदादिविविधरूपैश्चरन् काश्यां ग्रहपतिर्न कदापि, न वा क्वाऽपि जने छिद्रान्वेषणसमर्थः सन् आत्मानं निन्दन् मनस्यचिन्तयत्—"यदकृतकार्योऽहं मन्दरं प्रत्यावर्त्तेयं तदा स देवाधिदेवो मह्यं क्रुध्यति। कथं च तस्य पुरतः स्थातुमहं समर्थो भवेयम्। हरकोपानले नूनं पतङ्गतां यातं मां पितामहोऽपि त्रातुं न समर्थो भविष्यतीति" चिन्तयित्वा स निश्चितवान् —

स्थास्याम्यत्रैव तन्नित्यं न त्यक्ष्यामि कदाचन।
क्षेत्रसंन्यासविधिना वाराणस्यां कृताश्रमः॥
(का० ख० ४६।२९)

मनसि स चिन्तितवान्—"कार्यसिद्धिं वाऽसिद्धिं खल्वनिवेद्य इह निवसतो मे यत्पापं भविष्यति, तत्पापं काशी किल अपाकरिष्यति"। अपि च—

अन्यान्यपि च पापानि महान्त्यल्पानि यानि च।
क्षयन्ति तानि सर्वाणि काशीं प्रविशतां सताम्॥ इति।
(तत्रैव—४६।३१)

स पुनरपि चिन्तयामास यत्तेन यत्कृतं तत्सर्वं शिवाज्ञामनुसरतैव कृतम्। यतो हि पुराररिेव निरदिशद्यद् दिवोदासस्य धर्मिणोऽवहेलना न कार्येति। धर्मो हि पुरुषार्थः सर्वतो रक्ष्यः —

धर्मो हि रक्षितो येन देहे सत्वरगत्वरे।
त्रैलोक्यं रक्षितं तेन किं कामार्थैः सुरक्षितैः॥ (तत्रैव—४६।३३)

पुनरपि —

धर्मस्तु रक्षितः सर्वैरपि देहव्ययेन च।
शिबिप्रभृतिभूपालैर्दधीचिप्रमुखैर्द्विजैः[1]॥
अयमेव हि वै धर्मः काशीसेवनसम्भवः।
रुषितादपि रुद्रान्मां रक्षिष्यति न संशयः॥
अवाप्य काशीं दुष्प्रापां को जहाति सचेतनः।
रत्नं करस्थमुत्सृज्य कः काचं संजिघृक्षति॥
(तत्रैव—४६।३६-३८)

---

१. रामानन्दीटीकायां द्रष्टव्यम्—
त्वचं कर्णः शिबिर्मांसं जीवं जीमूतवाहनः।
ददौ दधीचिरस्थीनि किं न देयं महात्मनाम्॥ इति।

यतो हि पुत्रमित्रकलत्राणि क्षेत्राणि धनादीनि च प्रतिजन्मलभ्यानि, काश्येका न लभ्या। काशीलाभो हि परमसुखदायकः। इतराणि तेजांसि तावदेव भासन्ते, यावन्नो जृम्भते काशिजं महः। इति सर्वज्ञो जगच्चक्षुरात्मानं द्वादशधा कृत्वा स्थायिरूपेणास्यां काशीपुर्यामवस्थितोऽभवत्।

तेषां च लोलार्कादिद्वादशादित्यानां नामानीह मूले षट्चत्वारिंशेऽध्याये ४५–४७ संख्यकेषु श्लोकेषु प्रोक्तानि। इमे द्वादशादित्यास्तमोऽधिकेभ्यो दुष्टेभ्यः क्षेत्रं रक्षन्ति। प्रथमो हि रविः **लोलार्कः** । नाम्नश्चास्य हेतुः —

**तस्यार्कस्य मनो लोलं यदासीत् काशिदर्शने।**
**अतो लोलार्क इत्याख्या काश्यां जाता विवस्वतः॥**

(का० ख० ४६।४८)

क्षेत्रस्य दक्षिणे भागेऽसिसङ्गमान्तिके काशीवासिनां योगक्षेमकर्त्तुः लोलार्कस्य स्थानमस्ति कुण्डञ्च। मार्गशीर्षस्य भानुसप्तम्यां भानुषष्ठ्यां वा दर्शनेन तत्कुण्डे स्नानेन च सर्वाणि पापानि नरस्य नश्यन्तीति तस्य महन्माहात्म्यम्[1]।

संवत्सरमध्ये तानि दुष्कृतानि प्रोक्तयोस्तिथ्योर्दर्शनेन विलीनानि भवन्ति। सूर्योपरागे तत्कुण्डे स्नानस्य हि कुरुक्षेत्रस्नानादपि दशगुणं पुण्यम्।

बहुधा चासिसङ्गमस्य, लोलार्ककुण्डस्य स्नानमाहात्म्यमत्र कीर्तितम्। रथसप्तम्यां (माघशुक्लसप्तम्यां) तत्र स्नानदर्शनयोः प्रत्यर्कवासरस्नानदर्शनयोश्चाप्यपरिमितं पुण्यफलमिह वर्णितम्। एवमेव प्रतिरविवासरे लोलार्कदर्शनेन, लोलार्ककुण्डस्नानेन विचर्चिकादयः सर्वे चर्मरोगा नश्यन्ति। सर्वेषां काशितीर्थानामयं तीर्थः शिरोभूतः। एवमेव चासिसङ्गमस्यापि महत्पुण्यफलप्रदत्वम्। यथा हि —

**सर्वेषामेव तीर्थानां स्नानाद्यल्लभ्यते फलम्।**
**तत्फलं सम्यगाप्येत नरैर्गङ्गासिसङ्गमे॥**
**नार्थवादोऽयमुदितः स्तुतिवादो न वै मुने।**
**सत्यं यथार्थवादोऽयं श्रद्धेयः सद्भिरादरात्॥**

(तत्रैव—४६।६१–६२)

---

१. काश्यां भाद्रशुक्लषष्ठ्यां लोलार्कमन्दिरे कुण्डे च महती जनमेलिका भवति। लक्षाधिकाः स्त्रीपुरुषास्तत्र दर्शनं कुण्डे स्नानं च कुर्वन्ति। नार्यश्च सन्ततिहीनाः स्नानं विधाय तत्र दर्शनं च कृत्वा धौतवस्त्रमार्द्रं च तत्र विहाय वर्षाभ्यन्तरे गर्भं धारयन्तीति जनश्रुतिः। कज्जलीगायकानामपि सम्मेलनानि भवन्ति तत्र।

पुनश्च यत्र साक्षाच्छम्भुः, शिवशिरस्तरङ्गिणी गङ्गा च, तस्य माहात्म्यस्य मिथ्यात्वं तार्किका वा वेदनिन्दका वा जल्पन्ति, नान्ये आस्तिकाः; किन्तु—

कस्यचित्काशितीर्थस्य महिम्नो महतस्तुलाम् ।
नाऽधिरोहेन्मुने ! नूनमपि त्रैलोक्यमण्डपः ॥
( का० ख० ४६।६५ )

एवं किल सहस्ररश्मिणो भास्करस्य काश्यां स्थायिनिवासकथामिषेण लोलार्कस्य, लोलार्ककुण्डस्यासिसङ्गमस्य काश्याश्च माहात्म्यमिह वर्णितम् ।

## सप्तचत्वारिंशाध्यायपर्यालोचनम्—

### उत्तरार्कस्याख्यानं तत्पूजनदर्शनमाहात्म्यं च

लोलार्कानन्तरं द्वितीयार्को यो वर्णितः, स उत्तरार्कः । काश्या उत्तरस्यां दिशि मन्दिरमस्ति उत्तरार्कस्य । समीप एव चार्ककुण्डमस्ति यद्धि बकरियाकुण्डनाम्ना जनैर्ज्ञायते । एतस्य महिमा काशीखण्डानुसारेणास्ति —

तापयन् दुःखसंघातं साधूनाप्याययन् रविः ।
उत्तरार्को महातेजाः काशीं रक्षति सर्वदा ॥
( तत्रैव—४७।२ )

अस्य विषये अस्ति कश्चिदैतिहासिको वृत्तः । पुराऽऽत्रेयवंशोद्भवः कश्चिद्विप्रः प्रियव्रतनामा काश्यां निवसति स्म । तस्य भार्या च शुभव्रता नाम्नी । तस्या गर्भान्मूल-नक्षत्रे प्रथमे पादे केन्द्रस्थे देवगुरौ कन्यैकाऽजायत, तस्य नाम सुलक्षणाऽभूत् । सा रूप-विनयसम्पन्ना, पित्रोः प्रिया, गृहकार्यनिपुणाऽऽसीत् । प्राप्तायाञ्चावस्थायां सुरम्याया रूपयौवनशालिन्याः सुलक्षणायाः कन्यायाः कुल-शील-वयः-श्रुत-रूपार्थादि-सम्पन्नाय वराय प्रदानचिन्ता पितुर्ववृधे ।

जाते च चिन्ताधिक्ये मूलर्क्षकन्याजन्मप्रभावेण चिन्ताज्वरेण च प्रियव्रतः पञ्चत्वं गतः । सुलक्षणाया जननी चापि पतिवियोगेन यमसदनमवाप । यतो हि —

धर्मोऽयं सहचारिण्या जीवताऽजीवताऽपि वा ।
पत्या सहैव स्थातव्यं पतिव्रतयुजा सदा ॥
नापत्यं पाति नो माता न पिता नैव बान्धवाः ।
पत्युश्चरणशुश्रूषा पायाद्वै केवलं स्त्रियम् ॥
( तत्रैव—४७।१४-१५ )

ततश्च सा वराका दुःखाब्धिमग्ना सुलक्षणा पित्रोरौर्ध्वदैहिकं कृत्यं सम्पाद्य गहनचिन्तानिमग्ना सञ्जाता यत् कथं यौवनावस्था रक्ष्येति। सा विचारितवती—"कथं दुस्तरं यौवनं पारयिष्ये। पितृभ्यामदत्ताहं कथं गुणशीलवयोरूपादिमन्तं वरमनुभवहीनाऽभिज्ञास्यामीति"। असति तथाभूतेऽनेकैस्तरुणै रूपवद्भिर्धनिकैर्भूयोभूयोऽभ्यर्थिताऽपि दृढनिश्चयेन ब्रह्मचर्यव्रतपरायणा तपश्चरणकृतनिश्चया काश्या उत्तरस्यां दिशि स्थितेऽर्कमन्दिरसन्निधौ उत्तरार्ककुण्डस्य तटे घोरं तपश्चचार। नित्यं च तस्याः पुरतो वर्कर्येकाऽचला तिष्ठति स्म। साऽपि सायंकाले किञ्चित् तृणपर्णादिकमभ्यवहृत्य तत्कुण्डस्य जलं पीत्वा स्वस्वामिसदनं व्रजति स्म।

इत्थं तपश्चरन्त्यां तस्यां सुदक्षिणायां गते बहुतिथे काले लीलया विचरन्तौ गौरीशङ्करौ तत्र समायातौ, उत्तरार्कसन्निधौ स्थाणुवन्निश्चलां तपस्यन्तीं सुदक्षिणां चावलोकयामासतुः। हिमगिरिनन्दिन्या आग्रहेण तस्याः सुदक्षिणाया मनोरथसिद्ध्यै वरप्रदानायानुकम्पितो भवन् शङ्करस्तां सुदक्षिणां वरं याचितुमुक्तवान्—

सुलक्षणे प्रसन्नोऽस्मि वरं वरय सुव्रते।
चिरं खिन्नासि तपसा कस्तेऽस्तीह मनोरथः॥
( का० ख० ४७।३२ )

सा च तपस्विनी कन्या त्र्यक्षं प्रत्यक्षं वीक्ष्य बद्धाञ्जलिस्तं प्रणमन्ती न स्वात्मार्थमपि तु तस्याश्छाग्याः कृते तामुद्धर्तुं प्रार्थयामास। यतो हि—

आत्मार्थं जीवलोकेऽस्मिन् को न जीवति मानवः।
परं परोपकारार्थं यो जीवति स जीवति॥
( तत्रैव—४७।३६ )

अनया दिशा मनसि परामृश्य, पशुत्वाद्वक्तुमसमर्थां वराकीमजां प्रति वरं याचमाना प्राक् साऽनुग्राह्येति ब्रवीति स्म सुदक्षिणा। तस्याः सुदक्षिणायाः परोपकारभावं निशम्य सर्वेशो नितरां तुष्यन् पार्वतीं पर्यपृच्छद्यदस्यै सुदक्षिणायै छाग्यै च को वरो देयः। ईशानी तच्छ्रुत्वोवाच—"यथा जया-विजया-जयन्तिकादयो बह्व्यः सख्यः सन्ति, तथैवेयं सुलक्षणाऽपि मे प्रियसखी भवतु। यत इयं ब्रह्मचारिणी कन्याऽस्त्यतोऽनेनैव देहेन मम प्रिया सखी भवतु" इति। तद्यथा—

अतिप्रिया भवित्री मे यद् बालब्रह्मचारिणी ।
अनेनैव शरीरेण दिव्यावयवभूषणा ॥
दिव्याम्बरा दिव्यगन्धा दिव्यज्ञानसमन्विता ।
समया मां सदैवास्तां चञ्चच्चामरधारिणी ॥
( का० ख० ४७।५१-५२ )

'अजा चाप्येषा काशिराजकुमारी भूत्वा भोगान् सम्भुज्यानुत्तमां मुक्तिं प्राप्स्यती'ति । अपि च—'पौषमासस्य रविवासरे सूर्योदयात्प्राक् स्नानेनास्मिन् कुण्डे सा छागी काशिराजस्य प्रिया पुत्री भविष्यती'ति ।

ततःप्रभृति कुण्डस्य तस्याख्या बर्करीकुण्डमिति जाता । ( अद्यापि बकरिया-कुण्डेति लोके नाम प्रचलितम् । ) पौषे मासि सूर्यवासरे तस्मिन् कुण्डे सांवत्सरी यात्रा विधेया, येन जनो महत्पुण्यफलमधिगच्छति ।

## अष्टचत्वारिंशाध्यायपर्यालोचनम्—

### साम्बादित्याख्यानं तस्य दर्शन-पूजनादिमाहात्म्यं च

देवकीसुतो यदुनन्दनो द्वारकापुर्यामुवास । तत्रैवाशीतिलक्षसंख्यकास्तादृशाः सुशीलास्तस्य कुमाराश्चापि तत्रासन्, यादृशाः स्वर्गेऽपि न लभ्याः । तत्राष्टपट्टमहिषी-सहिताः सहस्राधिकाः प्रेयस्योऽपि गोपीगणवल्लभेन सहैव निवसन्ति स्म ।

एकदा ब्रह्मणो मानसपुत्रस्तपोनिधिः धृतवल्कलकौपीनो गोपीचन्दनाङ्कितो मौञ्जीमेखलस्तपसा जाज्वल्यमानो नारदोऽम्बरचरो द्वारकापुरीमभिप्रपेदे ।

तमवलोक्य तत्क्षणं सर्वे कृष्णकुमाराः प्रबद्धमूर्द्धाञ्जलयः प्रणेमुः; किन्तु साम्बो हि नारदस्य रूपाकृतिमुपहसन् न प्रणनाम । यतः साम्बो नूनं परमरूपशाली आसीत्, रूपदर्पेणैव तेन तथाऽऽचरितम् । साम्बाभिप्रायं जानन्नपि नारदः परम-भगवतः श्रीकृष्णस्य जगन्मनोहरं सदनं विवेश । तत्र यथाविधि मधुपर्कादिभिः समभ्यर्च्य स्वासने च नारायणस्तं मुनिमुपावेशयत् । कथावार्ताप्रसङ्गेनैकान्ते जाते कृष्णस्य कर्णे कर्णेजपरूपेण नारदः किञ्चिदकथयत्—"हे मुरारे! यद्यपि सम्भावनाऽत्र स्वल्पाऽपि नास्ति, तथापि साम्बस्य चरित्रं सौन्दर्यं च यथा विशिष्टं तेनात्र रमणीनां धर्मरक्षणं नूनं कठिनम्" । अपि च प्रतीकारभावनयोक्तवान् नारदः —

"अवश्यं किञ्चिदत्राऽस्ति यशोदानन्दवर्धन ।
प्रायशस्तन्न घटतेऽसम्भाव्यं नाऽथवा स्त्रियाम् ॥
यूनां त्रिभुवनस्थानां साम्बोऽतीव सुरूपवान् ।
स्वभावचञ्चलाक्षीणां चेतोवृत्तिः सुचञ्चला" ॥
( तत्रैव—४८।१४-१५ )

नारदो ह्येतदपि प्रोक्तवान् यत्पञ्चबाणविमोहिता ललना नूनं कुल-शील-श्रुत-धनादीनि नापेक्षन्ते, केवलं रूपमेव समीक्षन्ते। अपरं चोक्तं यदष्टपट्टराज्यो विहाय वल्लवीनामितरासां विचेष्टितं कृष्णः स्वयं जानाति। अन्यदपि नारीणां चरित्रदोषाधानाय तासां विषये नारद उवाच, येन शङ्काबीजस्यारोपणं साम्बं प्रति वैकुण्ठेशमनसि समुदभवत्। नारदप्रोक्तानि वचांसि निशम्य कृष्णोऽपि तं सत्यमजानात्। चिन्तापरोऽपि क्रोधजुष्टोऽपि स नारदं प्राहिणोत्।

देवर्षौ गतेऽहर्निशं सावधानेन निरीक्षणेनाऽपि गोपीजनवल्लभो यदुपतिः क्वचिदपि किञ्चिदपि साम्बे वैकृतं नालक्षयत्।

कञ्चित्कालं व्यतीत्य नारदः पुनरपि कृष्णपुरीं द्वारकामाययौ। तदा च तत्रभवान् भगवान् मुरलीधरो नित्यवृन्दावनविहारी स्वीयाभिर्ललामाभिः ललनाभिः सह लीलापरायण आसीत्। सर्वं जानन्नपि नारदो बहिःक्रीडन्तं साम्बमेवाहूयाज्ञापयत्—"कृष्णान्तिकं तूर्णं याहि, ममागमनं च कथय" इति।

साम्बो नूनं किंकर्त्तव्यविमूढोऽभवत्। रहसि लीलासक्तं पितरं प्रति गमनं नोचितम्, एकतस्तस्य पितुः क्रोधकारणं भविष्यत्यपरतश्चैकदापराद्धस्य ज्वलदङ्गारसङ्काशस्फुरत्सर्वाङ्गतेजसो देवर्षेः क्रोधस्येति चिन्ताग्रस्तः, क्षणं विचार्य निश्चितवान् कृष्णनन्दनः साम्बो यन्नारदं प्रत्यधुना नापराधः कार्यः। यतो हि—

ब्रह्मकोपाग्निनिर्दग्धाः प्ररोहन्ति न जातुचित्।
अपराग्निविनिर्दग्धा रोहन्ते दावदग्धवत्॥
(का० ख० ४८।२८)

एवं विचार्य यावज्जाम्बवतीसुतः साम्बः पितुरन्तःपुरं प्राविशत्, तावत् स्त्रैणसमं मध्ये श्रीकृष्णमपश्यत्। दूरादेव पितरं प्रणम्य च यावन्नारदसन्देशमवदत्, तावत् तं साम्बमन्वगच्छन् नारदः स्वकार्यसिद्धये (साम्बं दण्डयितुमित्याशयो गूढः) तमन्वगच्छत्। कृष्णोऽपि सनारदं साम्बं पश्यन् ससम्भ्रमं पीताम्बरं दधदुत्तिष्ठवान्। कृष्णे समुत्थिते सर्वा अपि वल्लव्यः स्वं स्वमम्बरं गृह्णन्त्यो लज्जिताः समुत्तस्थुः।

कृष्णश्च महार्हशयनीये हस्ते धृत्वा महामुनिं समुपावेशयत्। साम्बश्च क्रीडितुं बहिर्जगाम। कृष्णक्रीडावशीभूतानां वराङ्गनानां स्खलितमालोक्यानुकूलं चावसरं विलोक्य नारदो जगौ—

पश्य पश्य महाबुद्धे! दृष्ट्वा जाम्बवतीसुतम्।
इमाः स्खलितमापन्नास्तद्रूपक्षुब्धचेतसः ॥ (तत्रैव—४८।३५)

कृष्णः किल नारदस्य भावं विज्ञाय 'कुष्ठी भवे'त्यशपत् साम्बं स्वसुतम् । यद्यपि साम्बो नूनं सर्वाः पितुः प्रेयसीः प्रति मातृभावमेव दधति स्म, तथापि शापभयात्, शरीरे च महाव्याधिभयजनितदारुणकष्टात् पितरं पापशान्तये प्रसादयामास । कृष्णोऽपि स्वौरसस्य सुतस्य निरैनस्त्वं ज्ञायं ज्ञायं कुष्ठरोगमोक्षाय वैश्वेश्वरीं पुरीं गन्तुं प्रैरयत्—

तत्र ब्रध्नं समाराध्य प्रकृतिं स्वामवाप्स्यसि ।
महैनसां क्षयोऽन्यत्र नास्ति वाराणसीं विना ॥

यत्र विश्वेश्वरः साक्षाद्यत्र स्वर्गापगा च सा ।
येषां महैनसां दृष्टा मुनिभिर्नैव निष्कृतिः ।
तेषां विशुद्धिरस्त्येव प्राप्य वाराणसीं पुरीम् ॥

( का० ख० ४८।४०-४१ )

काश्या एतावन्माहात्म्यं यद्वाराणस्यां न केवलं पापेभ्यो निवृत्तिः अपि तु प्रकृतिजनितकार्येभ्यः कृतेभ्योऽपि कल्मषेभ्यो मुक्तिर्भवति । शूलिना किलेह देहत्यागिनां विमुक्तय एवास्या वाराणस्याः सृष्टिर्विहिता । अतो राधारमणोऽकथयत्—"साम्ब ! कुष्ठरोगं निराकर्तुं काशीं याहि । नास्त्यन्योपायः कुष्ठरोगमोचनस्ये"ति । तदनु नारद आकाशमार्गेण प्रस्थितवान् ।

साम्बो वाराणसीमगमत् । तत्रासौ सप्ताश्वं समाराधयत् । मन्दिरपृष्ठतश्च कुण्डं निर्माय तत्र समाराधनेन ( कुण्डस्नानादिना च ) कुष्ठरोगमुक्तिमवाप्य यथापूर्वं रूपसौन्दर्यसमृद्धिमान् बभूव ।

तदारभ्य साम्बादित्यः सर्वरोगव्याधिविनाशकः सूर्यः । कुण्डश्चाद्यापि सूर्यकुण्डनाम्ना ख्यातः । परिसरोऽपि ( मोहल्ला ) 'सूरजकुण्ड' इत्याख्यां भजते । सूर्यदर्शनस्य, कुण्डस्नानस्य च विशेषतो रविवासरेऽरुणोदये महत्फलम् । वन्ध्यानां कृते पुत्रप्राप्तिः, बहूनि चान्यानि फलानि, सर्वसम्पत्तिमत्त्वम्, अनामयत्वम्, स्त्रीणां कृतेऽवैधव्यम्, नृणां कृते रूपशालित्वमित्यादीनि प्रोक्तानि । साम्बादित्यप्रपूजनेनाक्षयं धर्मं नरः प्राप्नोति । माघे मासि सिते दलेऽचलासप्तम्यां यदि सूर्यवारो भवेत्, तदाऽरुणोदयवेलाकृतस्नानदर्शनयोर्महिमा कीर्तयितुं न शक्यते । मन्दिरस्याष्टप्रदक्षिणाऽपि बहुफलदा । माघमासे रवौ तत्रत्याया यात्राया अपि महत्फलम् । एतन्निवेद्यं यदध्यायसमासौ प्रोक्तम्—

"इदानीं द्रौपदादित्यं कथयिष्यामि तेऽनघ" इति ।

## एकोनपञ्चाशत्तमाध्यायपर्यालोचनम्—

### द्रौपदादित्यस्याख्यानं तस्य दर्शन-पूजनादिमाहात्म्यं च

अत्राध्यायारम्भे एकः प्रश्नः सूतेन पृष्टस्तस्योत्तरं व्याचक्षाणेन व्यासेन पाराशर्येण बोधितम्—

पुराणसंहिता सूत ! ब्रूते त्रैकालिकीं कथाम् ।
सन्देहो नाऽत्र कर्त्तव्यो यतस्तद्गोचरोऽखिलम् ॥
( का० ख० ४९।२ )

प्रसङ्गतोऽत्र पूर्वोक्तं विज्ञाप्य पुराणकारः कथयति यत्पुरा पञ्चवक्त्रः पृथिव्यां पञ्चधा भूत्वा पञ्चानां पाण्डवानां रूपेण जगद्धितायाविरभवत् । द्रुपदस्य यजतो वह्निकुण्डाच्च शिवप्रिया हिमगिरिसुताऽपि परमसुन्दरी भूत्वा प्रादुरभवत्, यस्या द्रुपद-पुत्र्या आख्या कृष्णेति बभूव । अतः पाण्डुतनयाः पञ्च साक्षाच्छिववर्ष्मधरा भूत्वाऽवतेरुः । नारायणोऽपि द्वारकेशकृष्णरूपेणावततार । एकदा ते विपत्तिभाजो भवन्तः पाञ्चाल्या सहेतस्ततो विचेरुः । पतिव्यसनपतिता पाञ्चाली पतीनां कल्याणकामनया काशीं प्राप्यादित्यं भृशमाराधयत् ।

तस्या आराधनात्तुष्ट आदित्यः शुचिभावेनाराधनातत्परायै तस्यै सदर्वीं सपिधानामथ चाक्षयां स्थालिकां दत्वा प्रोवाच—

स्थाल्यैतया महाभागे यावन्तोऽन्नार्थिनो जनाः ।
तावन्तस्तृप्तिमाप्स्यन्ति यावच्च त्वं न भोक्ष्यसे ॥
भुक्तायां त्वयि रिक्तैषा पूर्णभक्ता भविष्यति ।
रसवद्व्यञ्जननिधिरिच्छाभक्ष्यप्रदायिनी ॥
( तत्रैव—४९।१२-१३)

पुनरपि सोऽवादीत्—विश्वेश्वराद् दक्षिणे भागे त्वत्पुरतः स्थितं मम मूर्तिं यः समाराधयिष्यति, तस्य क्षुद्बाधा कदापि न भविष्यति । विश्वेशकथनमप्यत्र प्रसङ्गे यद् यदा नरः पूर्वं रविमुपास्य शिवदर्शनं विधास्यति, तदा तस्याखिलानामघानां क्षयो भविष्यतीति । अन्यान्यपि वरदानानि स्वयं शम्भुना दत्तानि । एषाऽऽदित्यमूर्त्तिर्विश्वेशाद् दक्षिणे भागे दण्डपाणेः समीपे स्थिताऽऽसीत् । अधुना विश्वनाथवीथ्यां हनुमन्मन्दिरेऽक्षयवटस्याधस्तादस्ति । तत्रत्याया द्रौपद्या अपि दर्शनेन क्षुत्तृड्बाधा विनश्यन्ति । अस्याख्यानस्य श्रवणमप्यघोघहरम् ।

### मयूखादित्याख्यानं तस्य दर्शन-पूजनादिमहिमा च

पुरा लोकविख्याते पञ्चनदे तीर्थे स्वयं भगवान् सहस्रमयूखः गभस्तीश्वरलिङ्गं मङ्गलागौरीं च संस्थाप्य महादारुणं तपस्तप्तुमारेभे । व्यतीते च दिव्यलक्षवर्षे घोरं

तपश्चरतः प्रभाकरस्य, सोमं ( उमया सहितं ) सोमार्द्धकृतशेखरं चाराधयतस्तस्य तपनस्य तपस्यायाः प्रभावात् तिग्मरश्मेस्तेजोभिर्द्यावाभूम्योरन्तरं विलुप्तमभवत्—

मयूखा एव दृश्यन्ते तिर्यगूर्ध्वमधोऽपि च ।
आदित्यस्य न चादित्यो नीपपुष्पस्थितेरिव ॥

( का० ख० ४९।३२ )

तपोराशेः सहस्रमयूखस्य तपोऽर्चिभिः सूर्यस्य च स्वीयमहोभिः साध्वसात्स-चराचरं त्रैलोक्यं चकम्पे । असौ दिवाकर एव जगच्चक्षुरिति कथ्यते । तमोऽन्धसागर-निमग्नं प्राणिजातं लक्षाधिककिरणैः समुद्धरति, इति व्याकुलितं लोकं सूर्यतपो-जैस्तेजोभिर्दर्शं दर्शं विश्वेश्वरो विश्वरक्षकः प्रचण्डकरं वरं दातुं तत्सन्निधौ (सूर्यसमीपं) जगाम । सूर्यं च तत्र समाधिविस्मृतात्मानं समवलोक्य तस्य तपः प्रति विसिस्मिये । नीलकण्ठश्च वारं वारम् "अधुना तपसे अलम्, वरं ब्रूहि" इत्यभाषत; परन्तु ध्यान-समाधिना निरुद्धेन्द्रियवृत्तिः सहस्रार्चिः शम्भोर्वचनं कर्णाभ्यां न जग्राह । ततश्च—

काष्ठीभूतं तु तं ज्ञात्वा शिवः पस्पर्श पाणिना ।
महातपः समुद्भूतसन्तापाऽमृतवर्षिणा ॥
तत उन्मीलयाञ्चक्रे लोचने विश्वलोचनः ।
तस्योदयमिव प्राप्य प्रगे पङ्कजिनीवनी ॥

( तत्रैव—४९।४२-४३ )

यथा ग्रीष्मदारुणतापतप्ता क्षोणी मेघजलप्रचुरसीकरैरुत्फुल्ला जायते, तथैव त्र्यम्बकमम्बिकानाथं प्रत्यक्षं चक्षुषोः समक्षं विलोक्य सर्वाङ्गतुष्टो दण्डवत्प्रणमन् स्तुवञ्चापि सहस्ररश्मिः शूलिनं तुष्टाव ।

स च स्तवोऽष्टललितपद्यात्मको मृडाष्टकः । यस्मिन् स्तोत्रे प्रथमश्लोके शम्भोः कृते सम्बोधनपदानि सन्ति । यथा—

देवदेव जगतां पते विभो भर्गभीम भव चन्द्रभूषण ।
भूतनाथ भवभीतिहारक नतोऽस्मि नतवाञ्छितप्रद ॥

( तत्रैव—४९।४६ )

एवं प्रकारेण देवदेवं महादेवं चतुःषष्टिनामभिः सम्बोधयन् द्वादशात्मा प्रणामनिवेदनं कृतवान् । इत्थं मृडं स्तुवन् परीत्य मङ्गलां गौरीं स्तोतुमारेभे मङ्गलाष्टकेन, यस्य स्तवच्छन्दसः प्रथमः श्लोकोऽस्ति—

देवि ! त्वदम्बुचरणाम्बुजरेणुगौरीं
भालस्थलीं वहति यः प्रणतिप्रवीणः ।
जन्मान्तरेऽपि रजनीकरचारुलेखा
तां गौरयत्यतितरां किल तस्य पुंसः ॥ ( तत्रैव—४९।५५ )

पुनश्चावसाने—

स्तुत्वेति तां स्मरहरार्धशरीरशोभां
श्रीमङ्गलाष्टकमहास्तवनेन भानुः ।
देवीं च देवमसकृत्परितः प्रणम्य
तूष्णीं बभूव सविता शिवयोः पुरस्तात् ॥ (का० ख० ४९।६३)

शङ्करश्च प्रणतं जगच्चक्षुषं प्रोवाच—'तेऽहं प्रसन्नोऽस्मि, उत्तिष्ठ। मन्नेत्रगो भूत्वा, हे मित्र ! तस्थिवांसं जङ्गमं च विश्वं प्रपश्यतु। त्वमेव सर्वमहोराशिः, त्वं सर्वजनानामखिलकर्मवेत्ता, सर्वजगतां दुःखानां त्वमेव दूरकर्ताऽसि। चतुःषष्टि-नाम्नां यदष्टपद्यात्मकमष्टकस्तोत्रं कीर्तितम्, तथा च मङ्गलागौर्याः स्तवने यन्मङ्गलाष्टक-संज्ञकं स्तवनमुदीरितम्, तौ द्वौ स्तवौ महनीयौ। तयोः केवलं पाठः सर्वपापविध्वंसकः। दूरदेशस्थोऽपि जनः स्तोत्रद्वयपाठमात्रेण काशीं प्राप्स्यति। अन्यान्यपि फलानि स्तव-युगलस्य फलश्रुतिविषयकान्यत्र स्वयं महेश्वरेण प्रोक्तानि, यथान्ते—

तदावयोः स्तवादस्मान्निष्प्रपञ्चो जनो भवेत् ।
समृद्धिमाप्य महतीं पुत्र-पौत्रवतीमिह ॥
अन्ते निर्वाणमाप्नोति जपन् स्तोत्रमिदं नरः ॥
( तत्रैव—४९।७५-७६ )

अन्यदपि सूचयन् भगवान् भूतभावनोऽवर्णयद् यद् गभस्तीश्वरं लिङ्गं वा गभस्ति-मालिना प्रतिष्ठापितं सर्वसिद्धिसमर्पकं भविष्यति। अस्य लिङ्गस्य गभस्तीश्वरसंज्ञा भविता। एतस्य सभक्तिकेनाराधनेन सर्वकिल्बिषप्रणशनाद् जननीजठरे शयनमपि न भविष्यति।

एतस्या मङ्गलागौर्या अपि समाराधनं सविध्यनुष्ठितपूजनमत्र वर्णित-मशीतिपद्यादारभ्य षडशीतिपद्यपर्यन्तम् । मङ्गलाया गौर्या यथोक्तविधिविधान-जुष्टेनानुष्ठानपूर्वकसमाराधनेन नूनं महत्फलमवाप्यत एव, यथा—दौर्भाग्यविनाशः, सन्तानविच्छेदाभावः, सदा भोगावाप्तिः, नारीणां वैधव्यनाशः, स्त्रीवियोगराहित्यम्, पापविनाशः, पुण्यराशिप्राप्तिः, वन्ध्यायै सन्ततिलाभः, कुरूपत्वहानिरित्यादीनि फलानि सम्भवन्ति। कुमारी चानयाऽऽराधनया सुशीलं सुरूपं चिरञ्जीविनं पतिं विन्दते, कुमारश्चास्य व्रतप्रभावेणोत्तमां सहचारिणीं प्राप्नोति—

कुमारोऽपि व्रतं कृत्वा विन्दति स्त्रियमुत्तमाम् ।
सन्ति व्रतानि बहुशो धनकामप्रदानि च ॥
नाप्नुयुर्जातुचित्तानि मङ्गलाव्रततुल्यताम् ।
कर्तव्या चाब्दिकी यात्रा मधौ तस्यां तिथौ नरैः ॥
( का० ख० ४९।९०-९१ )

मधौ मासे (चैत्रमासे) तृतीयायां तिथौ काशिवासिभिर्मङ्गलागौर्या वार्षिकी यात्रा विधेया । अस्या यात्राया अपि महत्फलम् । शम्भुश्च दिनमणिं द्युमणिं पुनरवोचत्—"तपस्याकाले यतस्ते मयूखमात्रमेव दृष्टं बभूव, न विग्रह इति, अतस्तस्याः प्रतिमाया मयूखादित्याख्या भविष्यति। त्वदर्चनया च सूर्यवारे व्याधि-दारिद्र्यादिप्रध्वंसो भविष्यति" । इत्थं बहून् वरानादित्याय प्रदाय शिवोऽन्तर्हितोऽभवत्, रविश्च तत्रैव तस्थिवान् ।

अस्याध्यायस्य द्वयोर्द्रौपदादित्य-मयूखादित्ययोः कथा महत्फलदेति ।

## पञ्चाशत्तमाध्यायपर्यालोचनम्—

### खखोल्कादित्य-गरुडेश्वरलिङ्गयोराख्यानम्

एषोऽध्यायः किञ्चिद्बृहदाकार आश्चर्यजनकाख्यानजुष्टश्च । तथा हि—एतस्मिन्नध्याये मरीचिपत्न्योः कद्रूविनतयोः पौराणिकी कथा वर्णिता । ते च दक्षस्य सुते बभूवतुः । अनयोर्मध्ये कद्रूः किल कुटिला छलनामयी सर्परूपिणी विषधराणां जननी बभूव, विनता च यथार्थनाम्नी सरला विनयवती पक्षिणी ( पतङ्गिनी ) जाता । एकदा क्रीडन्त्यौ ते वार्तालापप्रसङ्गेन कद्र्वा अत्याग्रहेण विनतया च भूयो-भूयो वारणेनापि ते द्वे परस्परं पणं चक्रतुः । तत्र प्रश्नोऽभवद्यत्सहस्ररश्मेरश्वरूपं कीदृशं श्यामलं श्वेतं वा ? तत्र या पणे पराजिता स्यात्साऽन्यस्या दासीत्वं प्राप्स्यति । यथा चोक्तं पूर्वं विनता ह्याग्रहवती बभूव यत्पणो हि परस्परस्नेहविघातको भविष्यति । स न कार्यः । यथोक्तम्—

ज्ञात्वा पणो न कर्त्तव्यो मिथः स्नेहमभीप्सता ।
ध्रुवमेकस्य विजये क्रोधोऽन्यस्येह जायते ॥
( तत्रैव—५०।९ )

परन्तु कुटिला कद्रूः पूर्वोक्तं पणमेवाकरोत् । तत्र विनतयोक्तं यत् तिग्मरश्मेरश्वरूपं श्वेतम्, कद्र्वा चोक्तं तत्कर्बुरम् । तदनन्तरं च ते स्वं स्वमालयमगच्छताम् ।

गतायां च विनतायां कद्रूः स्वपुत्रान्कृष्णसर्पानाहूयाज्ञप्ता यत्—"अरुणोदय-वेलायां यूयं तरणिसन्निधौ गत्वा अश्वस्य बालधिं परिवृत्य तं कृष्णवर्णमयं कुरुत । अथ च विषमयैः सीत्कृतैस्तस्य शरीरमपि कर्बुरीभावत्वं प्रापणीयम्" ।

यद्यपि नागाः सूर्यतापभयत्रस्तास्तथा चानुचिताचरणभयभीता जननीं तथाऽकरणायार्थितवन्तस्तथापि कुटिला कद्रूः आज्ञापालनेऽरुचिं दर्शयतस्तान् शशाप—

तार्क्ष्यस्य भक्ष्या भवत यूयं मद्वाक्यलङ्घनात् ।
जातमात्रांश्च सर्पिण्यो भक्षयन्तु स्वबालकान् ।।
( का० ख० ५०।२६ )

मातुः शापानलात् त्रस्ताः कद्रूसुता नागा जनन्याज्ञामनुसस्रुः । तथाकृतेऽन्येद्युर्विनतायाः पृष्ठमारुह्य कद्रूः सूर्यतापतप्ताऽपि कथञ्चिद्विनताप्रभावेण सूर्यसमीपं गतवती । यद्यपि कद्रूः पथि सूर्यतापसंत्रस्तैकदाऽब्रवीत्—

विनते विनतां मां त्वं किं नावसि पतत्त्रिणी ।
तव दासी भविष्यामि त्वदुच्छिष्टनिषेविणी ।।
यावज्जीवमहं भूयां त्वत्पादोदकपायिनी ।
खखोल्का निपतेदेषा भृशं गद्गदभाषिणी ।।
( तत्रैव—५०।३६-३७ )

'खखोल्कः पतति' इत्युच्चरन्ती कद्रूः मूर्च्छामवाप[1] । तस्या भगिन्या वचनं निशम्य विनतया 'खखोल्क'-नाम्नाऽऽदित्यः स्तुतः । तदाप्रभृति सूर्यस्य 'खखोल्कादित्य' इति नामाभूत् । तदनन्तरं च कपटरचनया सूर्यस्याश्वान् कर्बुरवर्णान् दृष्ट्वा पराजिता विनता कद्रूं प्रति दासीभावं स्वीचकार । यतो हि—

विधिर्बलीयान् भुजगि चित्रं जयपराजये ।
क्रूरोऽपि विजयी क्वापि त्वक्रूरोऽपि पराजयी ।।
( तत्रैव--५०।४३ )

एवम्भूते वृत्ते पराजिता विनताऽऽचारवती सदोदासीना दासीकर्म कुर्वाणा तिष्ठति स्म । एकदा विनतासुतो गरुडो मातरं विनतामश्रुपूर्णां मलिनां श्रान्तामुदासीनां दृष्ट्वा तत्कारणं पृच्छति स्म । वैनतेयः पर्यपृच्छत्—

---

१. खादुल्का पततीति वक्तव्येऽर्धमूर्च्छिता कद्रूः—खादाकाशात् सूर्यरूपा उल्का पततीत्येवं कथनस्थाने खखोल्केति ब्रवीति स्म । अत एव विनता 'खखोल्कादित्य'नाम्ना सूर्यस्तुतिं चक्रे, इत्यत्राधिकमवगन्तव्यम् ।

प्रातःप्रातरहो मातः क्व यासि त्वं दिने दिने।
सायमायासि च कुतो विच्छाया दीनमानसा ॥

( का० ख० ५०।४६ )

पुनश्च गरुत्मानुवाच—

ब्रूहि मातर्झटित्यद्य कुतो दूनासि पत्रिणि ।
मयि जीवति ते बाले कालेऽपि कृतसाध्वसे ॥

( तत्रैव—५०।४८ )

एवं पक्षिराजेन बहूक्तम् । श्रुत्वा चोर्जस्वलं भक्तिपूर्णं पतत्रिपतेर्वचनं संक्षेपेण सर्वं वृत्तमथ च दासीत्वमवर्णयत् । तयोक्तम्—

अहं दास्यस्मि रे बाल ! कद्र्वाश्च क्रूरचेतसः ।
पृष्ठे वहामि तां नित्यं तत्पुत्रानपि पुत्रक ॥

( तत्रैव—५०।५२ )

सा गरुत्मन्तं सर्वं स्वदुःखं न्यवेदयत्, दासीत्वकारणं च । गरुडाय सर्वां कद्र्वाः कौटिल्यकथां सा विवृतवती । ततश्च गरुडः प्रैरयन्मातरं यद् गत्वा जानीहि काद्रवेया नागाः कथं तुभ्यं दास्यभावान्मुक्तिं दास्यन्तीति । इत्थं जाते कद्रूः काद्रवेयाश्च परस्परं सम्मन्त्र्य हृष्टचेतसः प्रोचुः—"यदि मातुर्दास्यविमोक्षाय गरुडो नोऽमृतं दास्यति, तदा पणजन्यदास्यमुक्तिर्भविष्यतीति"।

ततश्च विनता गरुडं सुधामानेतुं समादिशत् । गरुडः प्रोवाच—"मातः ! क्षुधार्त्तोऽहम् । मां प्रथमं झटिति भोजनं देहि, तदनन्तरं चाविलम्बेनाहं सुधामानेष्यामीति"। विनता नागान्तकं स्वपुत्रं विज्ञापितवती यत्स समुद्रतीरं गत्वा निषादानां मत्स्यघातिनां हिंसकानां भक्षणं कुर्यात् । तथा हि—

परप्राणैर्निजप्राणान् ये पुष्णन्तीह दुर्धियः ।
शासनीयाः प्रयत्नेन श्रेयस्तच्छासनं परम् ॥
बहुहिंसाकृतां हिंसा भवेत्स्वर्गस्य साधनम् ।
विहिंसितेषु दुष्टेषु रक्ष्यन्ते भूरिशो यतः ॥

( तत्रैव—५०।६५-६६ )

इत्यपि विनता तमाज्ञापयत् । यदि मत्स्यादीनां निषादानां मध्ये वसन् कश्चिद् ब्राह्मणश्चेत्तदाऽसावभक्ष्यः । ब्राह्मणाभिज्ञानस्य परिचयं प्रयच्छन्ती साऽसूचयत्—यस्य गले यज्ञसूत्रम्, निर्मलमुत्तरीयम्, यस्य च वासांसि नित्यधौतानि, भालं च तिलकमण्डितम्,

शिरसि च शिखाग्रन्थिः, तमेवं विप्रं ज्ञात्वा स त्याज्यः। अन्यान्यपि ब्राह्मणलक्षणानि कथयित्वा पुनरपि साऽकथयद् यदि कश्चिद् ब्राह्मणोऽज्ञानेनापरिचयेन वा कवलीकृतो भवेत्तदा यदि कण्ठे ब्रह्मतेजसः खदिरकाष्ठाङ्गारवज्ज्वलनं भवेत्तदा तमुद्गिरेत्। यतो हि—

द्विजमात्रेऽपि या हिंसा सा हिंसा कुशलाय न।
देशं वंशं श्रियं स्वं च निर्मूलयति कालतः॥

(का० ख० ५०।७५)

'द्विजमात्रेऽपि' इत्यस्याशयो हि द्विजलक्षण-वेश-कर्मरहितेऽपि ब्राह्मणे हिंसा-करणं ब्रह्महत्यैवेति।

सर्वं श्रुत्वा ज्ञात्वा च मातरं प्रणम्य तस्याशीर्वादं च प्राप्य सरित्पतिरोधसि पतत्रि-पतिर्गत्वा महाकन्दरसंकाशं वदनं व्यादाय पक्षयोर्विधूननेन रोदसीं धूलिभ्य आपूर्य, यावन्निषादानां भक्षणायोद्यतस्तावन्निषादाः स्वयमेव तस्य व्यादत्ततुण्डकन्दरायां ततश्चोदरदर्यां प्रविविशुः। तदैव च कश्चिद्ब्राह्मणोऽपि तस्य गरुडस्य चञ्चुगह्वरे प्राविशत्।

एतावदेवान्तरे कञ्चन विप्रं विनतोक्तलक्षणैः परिज्ञाय गरुडस्तमुद्गीर्णवान्। पृष्टः स जन आत्मानं विप्रं सूचितवान्। स च जन्मना एव ब्राह्मणोऽभवत्कर्मणा च निषादकल्पः। तं दूरीकृत्य पक्षिराट् परितृप्ताऽमृतार्थं प्रलयवात इवाकाशमार्गेणागच्छत्।

तं गरुत्मन्तं तथाभूतवेगवद्गत्या समायान्तं दर्शं दर्शं देवा सज्जीकृतबलायुधाः सवाहनाः कवचधारिणो युद्धार्थमभिमुखा बभूवुः। अवलोक्य च तथा तेजस्विनं वेगवन्तं गरुडं तेऽव्यचारयन्—

तिर्यग्गती रविर्नायं नायमग्निः सधूमवान्।
क्षणप्रभाप्यसौ नैव को नः सम्मुख एत्यसौ॥

(तत्रैव—५०।८७)

इति दिशा ते यावत्तर्क-वितर्कपरा अभवन्, तावन्नागभोजी वैनतेयः स्वपक्षौ धुनोति स्म। पक्षवातवेगमात्रेण सर्वे सवाहनाः सुरा विपक्षिणोऽमृतमार्गविरोधकास्तृणपर्णवद्दूरे निक्षिप्ता बभूवुः। पक्षिराजश्च क्षणमात्राभ्यन्तरेण सुधायाः कोषागार-सन्निधौ गत्वा शस्त्रोद्यतरक्षकान् सुरानपि सर्वश आधूय सुधाभाण्डोपरि संस्थितं पवनवेगेन भ्रममाणं कर्तरीयन्त्रमपश्यत्, यद् यन्त्रं हि स्पर्शमात्रेण मशकमपि कोटिशः खण्डयितुं समर्थम्। दृष्ट्वा च तत् सवितर्कं व्यचारयत्—

न बलं प्रभवेदत्र न किञ्चिदपि पौरुषम्।
अहो ! प्रयत्नो देवानामेतत्पीयूषरक्षणे॥

(तत्रैव—५०।९६)

स चिन्तितवान्–''यद्यहं शङ्करभक्तोऽस्मि, यदि शङ्करे मेऽविचला भक्तिर्भवेत्, यदि चाहं मातृभक्तोऽस्मि, तदा मेऽमृतहरणसमर्था प्रज्ञा समुदेतु। यतो ह्येतत्कृत्यं मदीयं मातुर्दास्यविमुक्त्यै किलेत्यादि'' ।

इत्थं विचिन्तयन् वैनतेयोऽणोरप्यणीयांसं स्वदेहं विधाय कर्तरीयन्त्रस्याधोभागे शरीरलाघवात् प्रविश्य महता प्रयासेन बुद्धिपूर्णकौशलेन चात्मानं वायुखण्डनात् संरक्षयन्--

**मूलमुत्पाट्य तरसा गृहीत्वाऽमृतभाजनम् ।**
**निर्ययौ पावने मार्गे क्रोशत्सु स्वर्गसद्मसु ॥**

( का० ख० ५०।१०४ )

सुधागाररक्षकास्तत्क्षणमेव भगवन्तं पद्मनाभं गरुडेनामृतहरणस्य वृत्तं श्रावयाञ्चक्रुः। भगवान् स्वयमेव गत्वा खगेश्वरायाभयं प्रयच्छन् 'वरं वृणु' इत्याह। तद्वचनं श्रुत्वा हसन् गरुडो जनार्दनमाह--'त्वमेव वरद्वयं प्रार्थयस्वेति'। विष्णुश्चैकेन वरेण गरुडं स्ववाहनमकरोदपरेण चोक्तवान्—

**दर्शयित्वाऽमृतं प्राज्ञ ! मातृदास्यविमोक्षकम् ।**
**द्विजिह्वेभ्यः कुरु तथा द्रागश्नन्ति न ते यथा ॥**

(तत्रैव—५०।११४)

मुरारिरग्रेऽवदत्—'त्वया सुधा सुधाभुग्भ्यो देवेभ्यो देया'। तथास्त्वित्युक्त्वा विष्णुवाहनः सुधामानीय नागानां सन्निधौ संस्थाप्य तां च तान् दर्शयित्वा व्यज्ञापयद् यच्छुचिभवनानन्तरमेव नागैरमृतं स्पर्शनीयम्। स्नानं कृत्वाऽऽगत्य यथेच्छममृतं पान्त्विति। श्रुत्वा च वैनतेयवचनं काद्रवेया विनतां दास्यभावान्मोचयित्वा यावत्स्नानार्थमगमन्, तावत्पक्षिराजः कुशासनोपरि धृतं पीयूषभाजनमादाय पवनाधिकेन वेगेन पलायितः। स्नात्वाऽऽगत्य ते नागाः पीयूषकलशमदृष्ट्वा कलशाद्गलितानि पीयूषशीकराणि लेहनार्थं लौल्येन कुशासनमेव जिह्वया लेढुमारब्धवन्तः। अमृतस्यैकमपि कणं तु ते न प्राप्नुवन्; परं तेषां जिह्वा मध्यतो द्विधा जाताः। ततस्ते द्विजिह्वाः कथ्यन्ते।

दास्यविमुक्ता च विनता खेचरं पुत्रं प्रति काशीं प्रति गमनस्येच्छां प्रकटीचकार। तत्र तावदिमे श्लोकाः काशीमाहात्म्यवर्णनपराः —

**अथ दास्याद्विनिर्मुक्ता विनतोवाच खेचरम् ।**
**पुत्र ! काशीं प्रयास्यामि दास्यपापापनुत्तये ॥**
**तावत्पापानि जृम्भन्ते नानाजन्मार्जितान्यपि ।**
**यावत्काशी न हृत्संस्था पुनर्भवविघातिनी ॥**

काशीस्मरणमात्रेण किं चित्रं यदघं व्रजेत् ।
गर्भवासोऽपि नश्येत विश्वेशानुग्रहात्परात् ॥
यत्र विश्वेश्वरः साक्षात्तारापतिविभूषणः ।
तारयेत्तारकद्रोण्या दुस्तराद् भवसागरात् ॥
विश्वेशानुगृहीतानां विच्छिन्नाखिलकर्मणाम् ।
भवेत्काशीं प्रति मतिर्नेतरेषां कदाचन ॥
काशीं प्रति मनो येषां निःशेषक्षालितैनसाम् ।
त एव मानवा लोके सत्यं नृपशवो परे ॥

( का० ख० ५०।१२६-१३१ )

अग्रिमेष्वपि चतुर्षु श्लोकेषु वाराणसी मुक्तिदायिनीह वर्णिता ।

तार्क्ष्यो विनतावचनानि श्रावं श्रावं मातुराज्ञां प्राप्य तयैव सह मोक्ष-निक्षेपभूमिमविमुक्तपुरीं प्राप । तत्र पक्षीन्द्रो गरुडो 'गरुडेश्वरलिङ्गम्' संस्थाप्य निरुद्धसकलेन्द्रियवृत्तिर्घोरं तपश्चचार । माता विनताऽपि खखोल्कादित्यं तत्रैव प्रतिष्ठाप्य तपस्तेपे । तयोर्द्वयोस्तपसा गरुडेश्वर-खखोल्कादित्यौ प्रसन्नौ भूत्वा ताभ्यां बहूनि वरदानानि प्रदत्तवन्तौ । एतदपि काशीश्वरः प्रोवाच—

असावहं स वै विष्णुर्मास्तु ते भेददृक् च नौ ।
एवं तस्यैव पक्षीन्द्र ! दैत्येन्द्रबलहारिणः ॥

( तत्रैव—५०।१४४ )

एतदप्युक्तं यद्विष्णुवाहनो भूत्वा पक्षिराट् सर्वत्र पूज्यो भविष्यसीति । गरुडश्च शङ्कराद् वरं प्राप्य मधुसूदनं गत्वा तस्य वाहनो भूत्वा लोकपूज्यो जातः । शिवस्येतरा मूर्तिरेव खखोल्कादित्यो ज्ञेयः, स हि दर्शनमात्रेण निखिलानि पापकर्माणि नाशयति । विनतायास्तपःप्रभावात् स खलु 'विनतादित्य' इत्याख्यां लब्धवान् ।

काश्याः पैशङ्गले तीर्थे ( पिलपिलेत्यपरनामके ) त्रिलोचनमहादेवसन्निधौ स्थितस्य खखोल्कादित्यस्य (विनतादित्यस्य) दर्शनान्मनुजस्य सर्वे मनोरथाः पूर्यन्ते, अथ च मानवो नैरुज्यमवाप्नोति । एतस्याध्यायस्याख्यानाकर्णनमात्रेण सर्वेषामघानां विध्वंसनं भवतीति ।

पर्यालोचनेऽस्मिन् सम्पूर्णानन्दसंस्कृतविश्वविद्यालयद्वारा प्रकाशितस्य काशी-खण्डद्वितीयभागस्य नवनवोन्मेषशालिनो विषयाः पर्यालोचिताः । काशीखण्डस्य द्वितीयभागोऽयं नूनं काशीमाहात्म्यख्यापने निधिभूतोऽवगन्तव्यः ।



# भारतीयदर्शनेषु प्रमाणमीमांसा

डॉ० केदारनाथत्रिपाठी
आचार्योऽध्यक्षचरश्च,
दर्शनविभागस्य
काशी-हिन्दू-विश्वविद्यालये
वाराणसी

❀❀❀

'दर्शन'शब्दोऽयम् "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो निदिध्यासितव्यः" इति श्रुतिवचनमाधारीकृत्याध्यात्मजगति प्रवृत्तिमलभतेति मनीषिणो मन्यन्ते। दर्शन-विषयोऽपि मुख्यतयाऽऽत्मैवेत्यपि तस्यामेव श्रुतावुक्तम्। आत्मदर्शनसाधनानि तस्यामेव श्रुतौ निर्दिष्टानि श्रवणमनननिदिध्यासनानि त्रीणि। तानि च कुतः सम्पादनीयानीत्यपि प्रत्यपादिषत—

"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय इति दर्शनहेतवः"॥

इति वचनेन। तथा च श्रुतिवाक्योपपत्तिध्यानसम्पादनीयैः श्रवणमनननिदिध्या-सनैः साधनैरात्मा द्रष्टव्यः साक्षात्कर्तव्य इति श्रुतेरुपदेशः। दर्शनशब्दस्यापरोक्षानु-भवापरपर्यायसाक्षात्कारसाधनमर्थः, दृश्यते प्रेक्ष्यते साक्षात्क्रियतेऽनेनेति करण-व्युत्पत्तेः। भावव्युत्पत्त्या च साक्षात्कारोऽर्थः। एवं तावदात्मसाक्षात्कारसाधनानि श्रवणमनननिदिध्यासनानि न्यायवेदान्तसांख्ययोगादिशास्त्रैः प्रतिपादितानि सन्तीति, तान्यपि दर्शनशब्देन व्यपदिश्यन्ते। तानि च वेदाश्रितत्वाद् वेदानुगृहीतत्वाद् वा वैदिकदर्शनानीति व्यवह्रियन्ते। यानि तु न वेदाश्रितानि, तान्यवैदिकदर्शनत्वेन प्रसिद्धानि लोके। एभिर्वैदिकावैदिकदर्शनैरात्मतत्त्वसाक्षात्काराङ्गभूतो मननभागो मीमांसितः। मननं च प्रमाणोपज्ञमिति प्रमाणमीमांसेहोपक्रम्यते। मीमांसाशब्दश्च पूजितविचारवचनः। विचारस्य पूजितत्वं च सद्युक्तिकत्वम्। प्रमाणानि च प्रत्यक्षानु-मानादीनि यथायथं दर्शनेषु स्वीकृतानि सन्ति।

प्रमीयते प्रमाविषयीक्रियते वस्तुतत्त्वं येन तत्प्रमाणमिति प्रमाणसामान्य-लक्षणम्। इदमेव प्रमाणसामान्यलक्षणं वात्स्यायनोऽप्याह—"प्रत्यक्षानुमानोपमानशब्दाः

प्रमाणानि" इति सूत्रभाष्ये—समाख्यानिर्वचनसामर्थ्यसहितात् प्रमाणशब्दादेव प्रमाण-सामान्यलक्षणमवगम्यते, प्रमीयते येन तत्प्रमाणमिति। प्रमाकरणं प्रमाणमिति तदर्थः। इदं हि व्युत्पत्तिनिमित्तमात्रबोधाभिप्रायकं यत् समाख्यानिर्वचनसामर्थ्यात् प्रमाणशब्दस्य स्वार्थाभिधायकत्वकथनं भाष्यकारस्य। यद्यपीदं समाख्यानिर्वचन-सामर्थ्यमपि न प्रमाणशब्दस्य प्रवृत्तिनिमित्तबोधकत्वं विरुणद्धि, न वाऽव्याप्तमतिव्यापकं वा, प्रमाघटितत्वेनैव संशयविपर्ययादिसाधनानां स्वत एव व्यवच्छेदकत्वात्। यतो न हि संशयविपर्ययादीनां प्रमात्वमस्ति, तथापि कीदृशं तत् प्रमाकरणमिति स्फुटप्रतिपत्तये लक्षणान्तरकरणमावश्कं प्रतीत्य जयन्तभट्टैर्न्यायमञ्जर्यां प्रमाणसामान्यस्य लक्षणान्तरं कृतम्। तच्चेत्थम्—

अव्यभिचारिणीमसन्दिग्धामर्थोपलब्धिं विदधती बोधाबोधस्वभावा (बोधेति व्याप्तिज्ञानाद्यभिप्रायेण, अबोधेति च चक्षुरादीन्द्रियाभिप्रायेणोक्तमिति ज्ञेयम्) सामग्री प्रमाणमिति। अत्रापीदमाशङ्क्यते यत् प्रमाणशब्दस्य यत् समाख्यानिर्वचनात् स्वार्था-भिधायकत्वम्, न तदनुरोधीदं लक्षणम्। तथा हि—प्रमीयतेऽनेनेति प्रमाणम्, प्रमाकरण-रूपम्। करणं च साधकतमम्, साधकतमं करणमित्यनुशासनात्। तमप्प्रत्ययार्थश्चा-तिशयः, अतिशयश्च सापेक्षः। अतः साधकान्तरसम्भवे हि तदपेक्षयाऽतिशयो भवति। इतरसाधकापेक्षयाऽतिशयसद्भावादेव साधकतमं भवेत्, नान्यथा। प्रस्तुते च लक्षणे प्रमाकरणभूता सामग्र्येव भवति, सामग्र्याश्चैकत्वात् तदतिरिक्तसाधकान्तरानुपलम्भात् किमपेक्ष्यास्यां सामग्र्यामतिशयः स्यादिति वक्तव्यमापद्येत।

अपि च, कस्मिन् विषये सामग्री प्रमाणम्? प्रमीयमाणः कर्मभूतो विषयोऽपि सामग्र्यन्तर्गत एवेति कर्मभूतो विषयोऽपि करणभावं प्राप्नुयात्। न चेष्टापत्तिरिति वाच्यम्, एवं हि यदा कर्मापि करणभावं प्रतिपद्येत, तदा सर्वा अपि प्रमितयो निरा-लम्बना निर्विषयाः प्रसज्येरन्।

एवं यः सामग्र्या प्रमेयं प्रमिमीते, स प्रमाताऽपि प्रमाजनकसामग्र्यामेव लीनः। तथा च यदुच्यते—प्रमाता, प्रमाणम्, प्रमेयम्, प्रमितिश्चेति चतसृषु विधासु तत्त्वं समाविशतीति, तदपि व्याहन्येत। इत्थं च प्रमाणमात्रमेकं तत्त्वं प्रसज्येत। एवं लोकोऽपि न सामग्रीं करणमिति व्यवहरति। न हि कश्चिद् ब्रवीति–'सामग्र्या पश्यामि' इति, प्रत्युत चक्षुषा निरीक्षे, दीपेन पश्यामीत्येव वक्ति। तस्मान्न सामग्री प्रमाकरणम्, अकरणत्वाच्च सामग्री न प्रमाणमिति नेदं साधु प्रमाणलक्षणम्।

अत्रायं सिद्धान्तपक्षः—यतः साधकतमं करणम्, करणसाधनश्च प्रमाणशब्दः, अत एव सामग्र्याः प्रमाणत्वं युक्तम्। सामग्रीव्यतिरेके केवले कर्मणि सम्प्रदानादौ वा तमबर्थसंस्पर्शाभावात् साधकतमत्वानुपपत्तेः। यतो ह्यनेककारकसन्निधान एव कार्यं

भवति, तेष्वन्यतरविरहे च न भवति। तस्मात् कस्मिंश्चिदेकस्मिन् कारके तमबर्थोऽतिशयो नावधारयितुं शक्यते, सर्वेषामेव तस्मिन् कार्ये व्याप्रियमाणत्वात्। यद्युच्येत—यस्मिन् सति सहसैव कार्यजननमतिशय इति, तदपि न समुचितम्, यतः सोऽपि अतिशयोऽवस्थाविशेषे करणस्येव कर्मणोऽपि शक्यते वक्तुम्। यथा, घोरान्धकारे निशीथे सहसैव स्फुरता विद्युत्प्रकाशेन यत्र व्याघ्रादिज्ञानं जायते, तत्र विद्युत्प्रकाशे सातिशयत्वमवाप्यत इति तत्र व्याघ्रादिज्ञाने विद्युत्स्फुरणमपि करणं स्यात्। एवं सकलकारकसन्निधानेऽपि द्रष्टव्यविशिष्टव्यक्तिमन्तरेण सा व्यक्तिर्न दृश्यत इति दर्शनकर्मभूता सा व्यक्तिरपि करणं स्यात्। तस्मात् फलोत्पत्त्यविनाभाविस्वभावत्वरूपमवश्यकार्यजनकत्वमेवातिशयः, स एव च तमबर्थः। तादृशश्चातिशयः सामग्र्या एव, न कस्यचिदेकस्य। सन्निहिता चेत् सामग्री सम्पन्नमेव कार्यमिति सैव करणम्। अतः सामग्र्या एव प्रमारूपफलं प्रति करणत्वेन प्रमाणत्वमिति मतम्।

ननु किमपेक्षं सामग्र्याः करणत्वमिति चेत्, तदन्तर्गतकारकापेक्षमिति ब्रुवन्ति। न हि सामग्र्या कारकाणां निजं कर्मत्वादिस्वरूपं हीयते, साकल्यदशायामपि कारकाणां निजस्वरूपस्य प्रत्यभिज्ञानात्। न च कर्मापि सामग्र्यन्तर्गतमेवेति किं प्रति सामग्री करणं स्यादिति वाच्यम्, यतः समुदायिनां कारकाणां सामग्र्यवस्थायामपि स्वरूपाहानात्। अतः समुदायिविशेषे कर्मणि सामग्री करणं भविष्यत्येव। अत एव च सामग्र्यवस्थायामपि कर्मस्वरूपानपायान्न प्रमाया निरालम्बनत्वं निर्विषयत्वमिति। इत्थं प्रमाताऽपि पृथगुपदर्शितो भवत्येवेति प्रमाता, प्रमाणम्, प्रमेयम्, प्रमितिरिति विधाचतुष्टयमपि तत्त्वस्य सुष्ठूपपन्नम्।

यच्चोक्तम्—सामग्र्या पश्यामीति लोकव्यवहाराभावात्, प्रत्युत दीपेन पश्यामि, चक्षुषा पश्यामीति व्यवहाराच्च न सामग्री करणमिति, तन्न, सामग्री हि संहतिः, सा च संहन्यमानव्यतिरेकेण न व्यवहारपदवीमधिरोहतीति तेन सामग्र्या पश्यामीति न लोकव्यवहारः। ननु यदि सामग्री प्रमाकरणं तदा दीपस्येन्द्रियाणां वा कथं तृतीयानिर्देश इति चेत्, फलोपजननाविनाभाविस्वभावरूपो यः सामग्र्या धर्मः, स तदारोपणनिमित्त एवेति बोध्यम्। अत एवाऽकरणभूतेऽपि स्थाल्यादौ तद्रूपसमारोपणेन स्थाल्या पचतीति व्यपदेशो दृश्यत एव।

तस्मात् सामग्री समुदायान्तर्गतकारकापेक्षयाऽतिशयवती। अत एव करणभावमापन्ना सामग्री प्रमाणमिति न कोऽपि दोषः। अस्मिन् सामग्रीकरणत्वपक्षे प्रमितौ त्रीण्येव कारकाणि कर्तृकर्मकरणानीति। तेष्वपि कर्तृकर्मणी प्रति अपेक्षाकृतस्तमबर्थोऽ-

तिशयः करणेऽस्तीति तद्दृष्ट्या करणभूते चक्षुरादौ प्रमाणव्यवहारो भवेदिति का क्षतिः। तस्मात् कर्तृकर्मविलक्षणा संशयविपर्ययरहितार्थबोधविधायिनी बोधाबोधस्वरूपा सामग्री प्रमाणमिति युज्यते।

बोधः प्रमाणमिति **बौद्धाः**। तन्न युज्यते, बोधः प्रमाणफलं न प्रमाणम्। यदि स प्रमाणम्, तदा तस्य फलं वक्तव्यम्। तच्च प्रकृते नास्तीति न बोधः प्रमाणम्।

**मीमांसकमते**—आत्मेन्द्रियमनोऽर्थसन्निकर्षे सति उपजायमानो ज्ञानाख्यव्यापारः प्रमाणम्। स च जायमानो ज्ञानाख्यव्यापारोऽतीन्द्रिय इति तज्जन्यया ज्ञाततया सोऽनुमीयते। तस्माज्ज्ञातताख्यफलानुमेयो ज्ञानरूपव्यापारो ज्ञानादिशब्दवाच्यः प्रमाणमिति प्रमाणसामान्यलक्षणम्। इन्द्रियादीनां तदुत्पादकतया प्रमाणत्वमुपचरितम्, न तु साक्षात् प्रमाणत्वमिति मीमांसकमतम्।

अत्रापीदं विचार्यम्—न खल्वनित्यं परोक्षं ज्ञानं भवति। ज्ञातोऽर्थ इत्यत्रापि विशेषणविधया ज्ञानप्रत्यक्षमावश्यकम्। अन्यथा स विशिष्टप्रत्यय एव नोत्पद्येत। यथा शुक्लज्ञानं विना शुक्लः पट इति विशिष्टज्ञानं न भवति, तद्वत्। यद्युच्यते—क्रियास्वभावत्वाज्ज्ञानं परोक्षमिति चेत्, न, न हि क्रियास्वभावं ज्ञानम्; किन्तु फलस्वभावमेव। एवं क्रियापि प्रत्यक्षद्रव्यवर्तिनी प्रत्यक्षैव भवति, 'अश्वो धावति' इत्यश्वक्रियावत्। भट्टानां राद्धान्त आत्मा प्रत्यक्षस्तेन तत्क्रियाऽपि ज्ञानं प्रत्यक्षमेव। अतो नानुमेयता ज्ञानस्य, नापि प्रमाणत्वमेवेति।

**केचित्तु**—अविसंवादकत्वं प्रमाणसामान्यलक्षणमाचक्षते। अविसंवादकत्वं प्रापकत्वम्। तच्च सुखदुःखसाधनसमर्थस्य पदार्थस्य प्राप्तिपरिहारात्मिकायाः प्रवृत्तेर्निमित्तं प्रदर्शकत्वरूपम्। यतो ज्ञानप्रदर्शिते विषये प्रवृत्तौ सत्यां प्राप्तिर्भवतीति प्राप्तिं प्रति प्रमाणस्य प्रदर्शकत्वमेव व्यापारः, स च प्रापकत्वरूपः। पीतः शङ्ख इति भ्रमज्ञानस्य शङ्खप्रापकत्वेऽपि यथाऽवगतस्य पीतशङ्खस्याप्राप्तेर्न तज्ज्ञानस्य प्रमाणत्वम्। तथा च यथावगतार्थप्रापकत्वमविसंवादकत्वम्, तदेव च प्रमाणत्वमिति। इदमपि च बौद्धविशेषमतमेव, ज्ञानस्य प्रमाणत्वप्रतिपादनात्। इदं च पूर्ववदेव विमर्शनीयम्।

**सांख्यास्तु** बुद्धिवृत्तिः प्रमाणमित्याहुः। तदनुसारेण विषयाकारपरिणतेन्द्रियवृत्त्यनुवर्तिनी बुद्धिवृत्तिरेव पुरुषमनुरञ्जयन्ती प्रमाणम्। तदुपरक्तो हि पुरुषः प्रतिनियतवस्तुद्रष्टा सम्पद्यते, न स्वतः, अविकारित्वात्।

इदमपि न विचाररमणीयम्—यतो हि यो जानाति, बुध्यते, अध्यवस्यति वा, तस्य न तत्फलम् अर्थदर्शनम्, अचेतनत्वाद् बुद्धितत्त्वस्य। यस्य चार्थदर्शनं पुरुषस्य, स न जानाति, बुध्यते, अध्यवस्यति वा। तथा च सांख्यमते भिन्नाधिकरणत्वं प्रसक्तं प्रमाणफलयोः। ज्ञानादिधर्मः प्रमाणं पुरुषे नास्ति, प्रमाणफलमर्थदर्शनं बुद्धितत्त्वे नास्तीति।

अत्र चेदं **न्यायमतम्**—समाख्यानिर्वचनसामर्थ्यसहितात् प्रमाणपदादेव प्रमाण-सामान्यलक्षणमवगम्यते—प्रमीयते येन तत् प्रमाणमिति न्यायभाष्यम्। प्रमाकरणं प्रमाणमिति तदाशयः। अत्र संशय-विपर्यय-स्मृतिजनकव्यवच्छेदाय "इन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षम्" इति प्रत्यक्षलक्षणसूत्रादर्थोत्पन्नम्—अव्यभिचारिव्यवसायात्मकमिति पदत्रयं पूर्वसूत्रे "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इत्यत्राकृष्यते। तथा चैतस्मादेकस्मादेव सूत्रात् प्रमाणसामान्यलक्षणं प्रमाणविभागश्च गम्यत इति। यतो हि प्रत्यक्षलक्षणसूत्रादाकृष्टमुक्तविशेषणत्रयं प्रमाणचतुष्टयसाधारणम्। तत्र 'अर्थोत्पन्न'-पदेन ज्ञानरूपफलविशेषणेन स्मृतिजनकं व्यवच्छिद्यते। 'अव्यभिचारि'पदेन विपर्ययाधायकं व्युदस्यते। 'व्यवसायात्मक'-पदेन च संशयजनकं प्रमाणाभासं व्युदस्यते। ततश्चेदं प्रमाणसामान्यलक्षणं गम्यते—अर्थविषयमसन्दिग्धमव्यभिचारि च ज्ञानं येन जन्यते, तत्प्रमाणमिति। एतादृशलक्षणकस्य प्रमाणसामान्यस्य विभागः—'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति। अयमेवाभिप्रेतार्थः सूत्रकारस्येति गौतमीयसम्प्रदायः।

अत्रायं निष्कर्षोऽवधेयः—प्रमाकरणमिति प्रमाणलक्षणम्, प्रमाणस्य विषय इति प्रमेयस्य लक्षणम्, प्रमाश्रय इति प्रमातुर्लक्षणम्, सम्यगनुभूतिरिति प्रमाया लक्षणम्। इदमेव प्रमालक्षणं साक्षात्कारित्वेन विशेषितं सत् प्रत्यक्षप्रमाया लक्षणं भवति। लिङ्गजत्वादिना विशेषितमनुमित्यादिप्रमाया लक्षणं भवति। तथा चेदमपि सुष्ठूक्तं **भाष्ये**—प्रमाता, प्रमाणम्, प्रमेयम्, प्रमितिरिति चतसृषु विधासु तत्त्वं परिसमाप्यत इति।

प्रसङ्गेऽस्मिन् दर्शनानां प्रमाणविभागतल्लक्षणसम्बन्धिनो मतभेदाः स्मृता अपि नेह मीमांस्यन्ते निबन्धकलेवरवृद्धिशङ्कया। ते च स्वातन्त्र्येण पृथगेव विचारणीया इति मन्ये।

'**लक्षणप्रमाणाभ्यां वस्तुसिद्धिः**, इति, '**व्यावृत्तिर्व्यवहारश्च लक्षणस्य प्रयोजने**' इति चास्ति वादकथानियमः। तत्र प्रमाणसामान्यस्य लक्षणमितरव्यवच्छेद-प्रमाणपदव्यवहारोभयप्रयोजनकं नातिवैशद्येन न्यरूपि। सम्प्रति प्रमाणसामान्योपयोग-प्रदर्शनमुखेन प्रमाणसद्भावे प्रमाणमुपन्यस्यते येन प्रमाणं वस्तु सिद्ध्येदिति।

**अत्रेदं वक्तव्यम्**—लौकिकपारलौकिकेषु सर्वव्यवहारेषु प्रमाणस्यापरिहार्य उपयोग इत्यत्र नास्त्यणीयानपि संशयः। यतो हि प्रमाणमनुपजीव्य प्रवर्तमानो जनः स्वाभीष्टप्राप्तौ नैराश्यमेवाश्नुतेऽनर्थं च प्राप्नोतीति शुक्तिकासकले रजतभ्रमाद् रज्जौ च सर्पभ्रमात् सहसा प्रवर्तमानो भीत्या पलायमानश्च जनोऽनुभवत्येव नैराश्यमनर्थजातं चेति। अत एव प्रमाणस्यार्थवत्त्वमुद्घोषयता **महर्षिवात्स्यायनेनोक्तम्**—'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम्' इति।

प्रवर्तमान एव स्वाभीष्टमर्थं लभते, नाप्रवर्तमानः, स्वाभीष्टमर्थं प्रमाणतः प्रतिपद्यमान एव तत्प्राप्तये प्रवर्तते नाप्रतिपद्यमानः। सकलप्रवृत्तिनिमित्तं च प्रतिपत्तिः प्रमाणजन्यैव नाप्रमाणजन्येति सर्वमेतदभिप्रेत्य न्यायभाष्यकार आह—'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम्' इति। अत एव सर्वोऽपि सम्प्रदायाचार्यः प्रमाणमवश्यमाश्रयते—एकम्, द्वयम्, त्रयम्, चतुष्टयम्, पञ्च, षट्, अष्टौ वेति। योऽपि न्यूनसंख्याकं प्रमाणं मन्यते, सोऽपीतरेषां प्रमाणत्वं न स्वीकरोति, केवलं तु तेषां कस्मिंश्चित् प्रमाणेऽन्तर्भावमुपपाद्य प्रमाणान्तरत्वमेव प्रतिषेधति। तस्मात् सर्वमपि प्रमाणं यथायथमुपयोगि लौकिकालौकिकेषु समस्तव्यवहारेष्विति निर्विवादम्। इह प्रमाणसामान्यमीमांसामात्रे प्रवृत्तैरस्माभिः प्रमाणभेदविचारेभ्यो विरम्यत इत्यलं विस्तरेण।



# ब्रह्मज्ञानशब्दस्य निर्दुष्टार्थपरीक्षणम्*

डॉ० आदित्यनाथभट्टाचार्य्यः

उपाचार्यः, संस्कृत-विभागस्य

वर्धमान-विश्वविद्यालये

❀❀❀

अद्वैतवादिभिः शङ्करमधुसूदनप्रमुखैस्तथा तदनुयायिभिरन्यैरपि वैदान्तिकैर्मोक्षस्य साक्षात् साधनतया ब्रह्मज्ञानमेवाभिलष्यते। तस्य यस्तावन्निर्दुष्टोऽर्थः, स एव सम्प्रति श्रुतियुक्तिभाष्योक्त्यादिप्रमाणैर्यथाशक्ति पर्य्यवेक्ष्यते। अद्वैतवेदान्तिभिर्ब्रह्मज्ञानशब्दस्य ब्रह्मान्तःकरणवृत्तिरेवार्थः स्वीक्रियते। बहुविचारेण निर्धारितोऽप्ययमर्थस्त्वन्ततो नैव भवति विदुषां सन्तोषाय। असन्तोषकारणं चोपन्यस्य चिदभिव्यक्तिरेव ब्रह्मज्ञानशब्दस्य ग्राह्योऽर्थ इत्यावेदितमेवास्माभिर्युक्तिमुखेनास्मिन् निबन्धे।

यद्यपि ज्ञानशब्दस्य मुख्योऽर्थः प्रकाशः, तथापि ब्रह्मज्ञानस्थले ज्ञानशब्दस्य नैव प्रकाशोऽर्थः सम्पद्यते; किन्तु घटज्ञानादिष्वेव हि ज्ञानशब्दस्य प्रकाशार्थो गृह्यते। घटादेर्जडत्वाच्चैतन्याख्यप्रकाशेनैव तस्य स्फुरणं भवति। सर्वत्रैव हि लौकिकज्ञानस्थल आदावात्ममनःसंयोगः स्यात्, ततो मन-इन्द्रियसंयोगः, ततश्च विषयेन्द्रियसंयोगः। आत्ममनःसंयोगं विना केवलं समनस्केन्द्रियसन्निकर्षेण घटादिज्ञानं नोत्पद्यते। अतो लोके प्रकाशाख्यफलेन घटादेर्व्याप्तिसम्भवाद् घटादिप्रकाश एव घटज्ञानादिशब्दार्थो भवति; किन्तु ब्रह्मणः स्वयंप्रकाशमानत्वान्न कथमपि फलव्याप्तिर्भवेत्। अतो ब्रह्मज्ञानशब्देन नैव ब्रह्मप्रकाशरूपार्थो गम्यते; किन्तु ब्रह्मावरकाज्ञाननिवृत्तये ब्रह्माकारेणाकारिता शुद्धान्तःकरणवृत्तिरेव बोध्यते। एवमभिहितं विद्यारण्यमुनिना—

स्वप्रकाशोऽपि साक्ष्येव धीवृत्त्या व्याप्यतेऽन्यवत्।
फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्॥
बुद्धितत्स्थचिदाभासौ द्वावेतौ व्याप्नुतो घटम्।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत्॥
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता।
स्वयंप्रकाशमानत्वान्नाभास उपयुज्यते[1]॥

---

* हरिद्वार-गुरुकुल-काँगड़ी-विश्वविद्यालयसमनुष्ठिते ३५नमेऽखिलभारतीयप्राच्यविद्यासम्मेलने पठितोऽयं प्रबन्धः।

१. पञ्चदशी—७।९०–९२।

ब्रह्मज्ञानस्थले यदि ज्ञानशब्दस्य प्रकाशार्थत्वं स्यात्, तर्हि ब्रह्मणो ज्ञानविषयत्वमापद्यते; किन्त्वौपनिषदिकैर्ब्रह्मणो ज्ञानविषयत्वं निराक्रियत एव। यतो ब्रह्मणो ज्ञानविषयत्वे विषयाणां जडत्वाद् ब्रह्मणोऽपि जडत्वं स्यात्, जडत्वाच्च तस्यानित्यत्वमपि सिद्ध्यतु। किञ्च, ब्रह्मणः प्रकाशान्तरविषयत्वे तस्य स्वतःप्रकाशत्वमपि व्याहन्येत। अपि च ब्रह्मणो ज्ञानविषयत्वे ब्रह्मणो ज्ञेयत्वं स्यात्, तस्य च ज्ञेयत्वे ज्ञेयातिरिक्तस्य ज्ञातुरप्यभ्युपगमाद् ब्रह्माद्वैतवादः सर्वथैव दत्तजलाञ्जलिः प्रसज्येत। एतस्मादेव कारणादद्वैतिभिर्ब्रह्मणो ज्ञानविषयत्वं नाङ्गीक्रियते। अतश्च भगवान् शङ्कराचार्यो ब्रह्मान्तःकरणवृत्तेरेव ब्रह्मज्ञानशब्दवाच्यत्वमभ्युपगच्छति, न तु स कदापि ब्रह्मज्ञानशब्देन ब्रह्मप्रकाशरूपार्थमनुजानाति। तदुक्तमाचार्यशङ्करेण बृहदारण्यकोपनिषद्भाष्ये—"अज्ञानाध्यारोपणनिवृत्तिरेव आत्मानमेवावेदित्युक्तम्, नात्मनो विषयीकरणम्"[२] इति। तथा हि ब्रह्मज्ञानमित्यनेन ब्रह्मान्तःकरणवृत्तिः, सद्वृत्त्या च ब्रह्माज्ञाननिवृत्तिः, तया च तज्जन्यारोपनिषेधः, ततः खल्वारोपजन्ययावतीयदुःखविध्वंसश्च भवतीति प्रतीयते, न तु तेन ब्रह्मणः प्रकाशविषयत्वं ज्ञानविषयत्वं वाऽवधार्यते।

अपि च ब्रह्मज्ञानशब्दस्य ब्रह्मप्रकाशार्थत्वे न केवलमेतद्भाष्योक्तिविरोधः; अपि तु श्रुतिवचनविरोधोऽपि स्यात्। तथा हि 'तत् केन कं पश्येत्, केन कं विजानीयात्' (बृ० उ० १।४।१३), 'अविज्ञातं विजानतां विज्ञातमविजानताम्' (केन० २।३) इत्यादिश्रुतिवाक्येषु ब्रह्मणो ज्ञानकर्मत्वनिषेधात् तस्य प्रकाशविषयत्वमेवाऽपाक्रियते। अतः श्रुतिभाष्यादिविरोधाद् ब्रह्मज्ञानशब्दस्य न ब्रह्मप्रकाशरूपार्थः सिद्ध्यति; किन्तु ब्रह्मान्तःकरणवृत्तिरेव ब्रह्मज्ञानशब्दार्थः पर्यवस्यति।

यद्यप्येतन्मते ब्रह्मणो वेदान्तवाक्यजन्यवृत्तिव्याप्यत्वेन 'तं त्वौपनिषदं पुरुषं पृच्छामि' ( बृ० उ० ३।९।२६ ), 'नावेदविन्मनुते तं बृहन्तम्' ( तै० ब्रा० ३।१२।९।७ ), 'शास्त्रयोनित्वात्' ( ब्र० सू० १।१।३ ), 'तत्तु समन्वयात्' ( ब्र० सू० १।१।४ ) इत्यादिश्रुतिसूत्रसमर्थितोऽर्थः प्रसज्यते, तथाप्येतन्मतेऽपि ब्रह्मणो वृत्तिविषयत्वेन ज्ञानविषयत्वमस्तु। अन्तःकरणवृत्तेश्च मधुसूदनप्रमुखाणां मते प्रमात्वात् तद्विषयत्वेन ब्रह्मणः प्रमेयत्वमस्तु, तथा च सति प्रमातुः प्रमाणप्रवृत्तिं विना प्रमेयत्वानुपपत्तेः प्रमेयातिरिक्तस्य प्रमाणस्य प्रमातुश्च सद्भावात् कथं नाद्वैतत्वहानिः ?

तत्रेदमुच्यते—वेदान्तवाक्यजन्यशुद्धान्तःकरणवृत्त्या नैवाभेदतत्त्वं सन्निकृष्यते; किन्तु केवलं वेद्यवेदितृवेदनादिभेद एवापनीयते। न हि किमपि शास्त्रं वाच्यवाचकभावेन ब्रह्मतत्त्वमिदन्तया निर्धारयति। न च विपश्चितां कापि युक्ति-

२. बृ० उ० १।४।१० भाष्यम्।

बुद्धिर्वा नित्यनिरतिशयं परमात्मानं कथमप्यवधारयितुं शक्नोति। तथा च श्रूयते—'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' ( तै० उ० २।४।१ ) इति। एवं मनननिदिध्यासनसहकृतवेदान्तवाक्यश्रवणेन सम्यग् ब्रह्मान्तःकरणवृत्तौ सत्यां सकलभेदबुद्धिनिवर्त्तनेन केवलं ब्रह्मज्ञानप्रतिबन्धकब्रह्मविषयकासम्भावनाविपरीतभावनाविनिवृत्तिरेव भवति, न तु तेन कस्यापि ब्रह्मलाभो भवति। तस्माद् वृत्तिविषयत्वेऽपि वृत्तिप्रतिबिम्बितचैतन्येन स्फुरणाभावाद् ब्रह्मणो ज्ञानविषयत्वं न कथमप्युपपद्यते।

नन्वेवं ब्रह्म यद्यप्रमेयं स्यात्, तर्हि शास्त्रे 'अनुद्रष्टव्यम्' इति वाक्ये कथं तस्य प्रमेयत्वमभिधीयते? अस्य विरोधस्य मीमांसा तु ब्रह्मसूत्रभाष्ये बृहदारण्यकभाष्ये च स्वयमेवाचार्येण कृता। भाष्यव्याख्यायामपि स्पष्टमुच्यत आनन्दगिरिणा बृहदारण्यकोपनिषदि (४।४।२०)—"वृत्तिव्याप्यत्वेन मेयत्वम्, स्फुरणाव्याप्यत्वेन चामेयत्वम्" इति। रत्नभाष्यकृताप्युक्तं भाष्यरत्नप्रभाख्यायां ब्रह्मसूत्रभाष्यव्याख्यायाम् (१।१।४)—"वेदान्तजन्यवृत्तिकृताविद्यानिवृत्तिफलशालितया शास्त्रप्रमाणकत्वम्, वृत्तिविषयत्वेऽपि स्वप्रकाशब्रह्मणो वृत्त्यभिव्यङ्ग्यस्फुरणाविषयत्वादप्रमेयत्वम्" इति।

अयमभिप्रायः—'तत् केन कं पश्येत्' इत्यादिवाक्यैरविद्याकल्पितभेदनिबन्धनं प्रमाणप्रमेयादिव्यापारं निषेधयच्छास्त्रं ब्रह्मतत्त्वं ज्ञापयत्येव केवलम्। अतः शास्त्रे सर्वत्र निषेधमुखाश्रयेणाऽऽत्मन्यनात्मभ्रान्तिरेव निवर्त्तते। ततश्च शुद्धान्तःकरणे स्वानुग्रहादेव स्वतःसिद्धं ब्रह्म प्रतिबिम्बितं भवतीत्येवोपनिषद्वचःसारः। तदुक्तमाचार्येण शारीरकभाष्ये (१।१।४)—"अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेत्, न, अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य। न हि शास्त्रमिदन्तया विषयीभूतं ब्रह्म प्रतिपिपादयिषति, किं तर्हि? प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्यवेदितृवेदनादिभेदमपनयति" इति।

तस्मान्निषेधमुखेनैव प्रतिपादनीयत्वाद् ब्रह्मणः शास्त्रप्रमाणकत्वेन प्रमेयत्वं यथा सङ्गच्छते, एवं प्रकाशाविषयत्वेन शास्त्रे विधिमुखेन प्रतिपादयितुमशक्यत्वाद् ब्रह्मणोऽप्रमेयत्वमपि युज्यते। अत्र घटादिवद् ब्रह्म तावदागमनिरपेक्षेण प्रत्यक्षादिप्रमाणेन नैव विज्ञातं भवतीत्यतो ब्रह्म खल्वप्रमेयमित्युच्यते। पुनरागमजन्यान्तःकरणवृत्त्याऽतद्व्यावृत्त्यैव सर्वधर्मवर्जितस्य स्वयंप्रकाशस्य ब्रह्मणोऽवबोधाद् ब्रह्मणः शब्दप्रमाणगम्यत्वेनाप्रमेयत्वमपि स्यादिति सर्वमविरुद्धम्। तदुक्तम्—"एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्" ( बृ० उ० ४।४।२० ) इत्युपनिषद्भाष्ये भगवता शङ्कराचार्येण। ननु विरुद्धमिदमुच्यतेऽप्रमेयं ज्ञायत इति च। ज्ञायत इति प्रमाणैर्मीयत इत्यर्थोऽप्रमेयमिति च तत्प्रतिषेधः। नैष दोषः। अन्यवस्तुवदागमातिरिक्तप्रमाणप्रमेयत्वप्रतिषेधार्थत्वात्। यथाऽन्यानि वस्तून्यागमनिरपेक्षैः प्रमाणैर्विषयीक्रियन्ते, न तथैतदात्मतत्त्वं प्रमाणान्तरेण विषयीकर्तुं शक्यते। सर्वस्यात्मत्वे केन कं पश्येद्

विजानीयादिति प्रमातृप्रमाणादिव्यापारप्रतिषेधेनैवागमोऽपि विज्ञापयति। न त्वभिधानाभिधेयलक्षणवाक्यधर्माङ्गीकरणेन। तस्मान्नागमेनापि स्वर्गमेर्वादिवत् तत् प्रतिपाद्यते। अनात्मभावनिवृत्तावात्मभावः स्वात्मनि स्वाभाविको यः, स केवलो भवतीत्यात्मा ज्ञायत इत्युच्यते। स्वतश्चाप्रमेयः प्रमाणान्तरेण न विषयीक्रियत इत्युभयमप्यविरुद्धमेव।

एवं ब्रह्मान्तःकरणवृत्तेर्ब्रह्मज्ञानशब्दार्थत्वे सिद्धे पुनरेका बलवती विप्रतिपत्तिरुत्पद्यते—ब्रह्मणो वृत्तिविषयत्वे वृत्त्युपहितं ब्रह्म वृत्तेर्विषयत्वं भजते, अनुपहितं निर्गुणं तु ब्रह्म न कथमपि वृत्तेर्विषयो भवति। सर्वत्रैव हि किञ्चिद्धर्मावच्छिन्नविषयाकारेणैवाकारिता भवेदन्तःकरणवृत्तिः। न तु सा कथञ्चिदपि किञ्चिद्धर्मानवच्छिन्ननिरुपहितब्रह्मविषयाकारा भवेत्। अतो ब्रह्मज्ञानस्यान्तःकरणवृत्तिरूपार्थः स्वीक्रियेत चेदुपहितब्रह्मविषयकज्ञानमेव 'ब्रह्मज्ञान'शब्दाभिधेयो भवेत्; किन्त्वद्वैतिनामनौपाधिकनिर्गुणब्रह्मविषयकज्ञानमेवेष्टम्। तादृशज्ञानमेव हि बन्धनमूलाज्ञाननिवर्त्तकत्वेन मोक्षसाधनं स्यात्।

अयमाशयः—वाचस्पतिमिश्रमते शुद्धब्रह्मविषयकवृत्तिज्ञानमेव न सम्भाव्यते। शुद्धमपि ब्रह्म यदा वृत्तेर्विषयो भवति, तदा वृत्त्युपहितत्वेन ब्रह्मणः शुद्धत्वं हीयते। तथा च सति शुद्धब्रह्मविषयकमज्ञानं भिन्नविषयत्वाद् वृत्त्युपहिताशुद्धब्रह्मविषयकज्ञानेन नैव शक्यमपनेतुम्। यतोऽज्ञानज्ञानयोर्बाध्यबाधकत्व एकविषयत्वमेव बीजम्। तस्माद् ब्रह्मान्तःकरणवृत्त्या शुद्धब्रह्माज्ञानस्यानुच्छेदाद् ब्रह्मज्ञानस्य कथं ब्रह्मान्तःकरणवृत्तिरूपार्थः सङ्गच्छेत ? तदुक्तं न्यायामृतग्रन्थे—

'शुद्धं ब्रह्म वृत्तिव्याप्यं नेति मते...ज्ञाननिवर्त्यत्वाभावाच्च' इति।

तत्रेदं समाधीयते—मधुसूदनप्रमुखाणां मते ब्रह्मणो वृत्त्युपहितत्वेनाऽशुद्धत्वाङ्गीकारेऽपि नोक्तदोषः प्रसरेत्। तथा हि ब्रह्मण्यध्यस्तीभूयैवाज्ञानं ब्रह्मचैतन्यमावृणुयात्। ब्रह्मण्यनध्यस्तमज्ञानमेव नैवास्ति प्रसिद्धं विद्वत्सभाजितेऽस्मिन् समाजे। तत्राज्ञानाध्यासदशायां ब्रह्म विशुद्धमप्यज्ञानोपहितमेव भवति। एव शुद्धब्रह्मविषयकान्तःकरणवृत्तिदशायां च शुद्धमपि ब्रह्मवृत्त्युपहितमेव भवति। तस्मादविद्याया वृत्तेश्चोपहितब्रह्मरूपैकविषयत्वान्मिथो विरोधेन तयोर्बाध्यबाधकताप्युपपद्यते। उक्तं चाद्वैतसिद्धौ—

'स्वरूपसदुपाधिमत्तद्विषयकज्ञाननिवर्त्यत्वस्य तन्मतेऽपि भावात्' इति।

इदमत्र तात्पर्यम्—अत्र ब्रह्मविषयकवृत्तिज्ञानं तथा ब्रह्मविषयकाज्ञानं च शुद्धब्रह्मण उपाधिमात्रं भवति। उपाधिश्च सर्वत्र कार्यानन्वयी व्यावर्त्तको भवति। तस्मादुपाधिना यत्रोपधेय उपहितः स्यात्, तत्रोपाधेर्नैव कार्येणाभेदेनान्वयो भवेत्।

अतो वृत्तिरूपोपाधेरज्ञानरूपोपाधेश्च नैवाभेदेन ब्रह्मान्वयः स्यात्। ब्रह्मचैतन्ये यस्योपाधित्वं कल्प्यते, तेनोपाधिना तत्राध्यस्तेनैव भवितव्यम्। न हि ब्रह्मण्यनध्यस्तं किञ्चिद् ब्रह्मचैतन्यस्योपाधिर्भवेत्। तत्र तु ब्रह्मण्यध्यस्तवृत्त्याऽध्यस्ताज्ञानेन च नैव ब्रह्मणः कथमपि शुद्धत्वहानिर्भवेत्। अध्यस्तानां गुणागुणौ न ह्यधिष्ठानेषु कदापि सङ्क्रामितौ भवेताम्। तदुक्तं शङ्करेणाध्यासभाष्ये—

यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि न स सम्बध्यते। तस्माद् वृत्त्युपाधिनाऽज्ञानोपाधिना चोपहितस्य ब्रह्मणः किञ्चिदपि न स्वोपाधिगतमालिन्ययोगः सम्भाव्यते। एवं शुद्धचैतन्यं न वृत्तिव्याप्यमिति वदद्भिर्वाचस्पतिमिश्रप्रमुखैर्नैव वृत्तिव्याप्यत्वेन चैतन्यस्याशुद्धत्वमङ्गीक्रियते; किन्तु वृत्तिः खलु ब्रह्मण्यनध्यस्तीभूय ब्रह्मचैतन्यं न विषयीकुर्यादित्येवाभिप्रेयते। एतेन वृत्तिसत्त्व एवाविषयस्यापि ब्रह्मणः केवलं विषयतामात्रं सम्पाद्यते, अग्राह्यस्यापि वा ब्रह्मणः केवलं ग्राह्यतामात्रमुत्प्रेक्ष्यते, न तु ब्रह्मणोऽशुद्धत्वमप्युपपाद्यते। एवं तत्त्वदृष्ट्या वाचस्पतिमिश्रमतेऽपि शुद्धब्रह्मविषयकज्ञानेनैव शुद्धब्रह्मविषयकाज्ञानस्य निवृत्तिर्भवेदिति स्थितम्। उपपादितं चैतद् विस्तरेण भामतीकल्पतरौ। उपस्थापितं च विशदीकृत्य दृश्यत्वहेतूपपादने ( अद्वैतसिद्धिः, पृ० २३३–९४ )।

विवरणमते सर्वथानुपहितं शुद्धमेव ब्रह्म तावदज्ञानस्य वृत्तेर्वा विषयः स्यात्। अज्ञानोपहितं वृत्त्युपहितं च ब्रह्म न कथमप्यज्ञानस्य वृत्तेर्वा विषयो भवेत्। अन्यथा अज्ञानमज्ञानस्य विषयः स्यात्, वृत्तिश्च वृत्तेर्विषय इति स्वस्य स्वग्राह्यतापत्तिदोषः समापतेत्, तथा तत्र विषयीभूतस्याज्ञानस्याप्यज्ञानान्तरं विषयः, वृत्तेश्च विषयीभूताया अपि वृत्त्यन्तरं विषयः, तत्र तत्रापि पुनः पुनस्तथैव धाराप्रवाहः स्यादित्यनवस्थादोषोऽपि वज्रलेपायेत। विवरणमते सर्वं वस्तु ज्ञाततयाऽज्ञाततया च साक्षिभास्यं भवति। साक्षिभास्यवस्तुनश्चाज्ञातसत्ता नास्ति। एतेनाज्ञानस्य साक्षिभास्यत्वान्नाज्ञानविषयत्वं सम्पद्यते। अत एवाज्ञानोपहितं ब्रह्म कथमज्ञानविषयः स्यात्। एवं प्रमाणसिद्धवस्तुन एवाज्ञातसत्ताकत्वात् "अर्थेऽनुपलब्धे प्रमाणम्" ( जै० सू० १।१।५ ) इति जैमिनिन्यायानुसारेणाज्ञातार्थज्ञापकत्वस्य प्रमाणत्वं वैदान्तिकैरपीष्यते। तत्र वृत्त्युपहितब्रह्मणो वृत्तिविषयत्वे तु विषयीभूताया वृत्तेरज्ञातसत्तावत्त्वेन साक्षिभास्यत्वानुपपत्तिः। एतेन विवरणकृदभिमतं वस्तुनो ज्ञाततया साक्षिभास्यत्वमित्येवंभूतनियमस्यापि लङ्घनं स्यात्। तस्माद् विवरणकृन्मतेऽज्ञानानुपहितं वृत्त्यनुपहितं च शुद्धमेव ब्रह्म वृत्तिव्याप्यं स्यादिति ज्ञानाज्ञानयोः समानविषयत्वात् सिद्धमेव नः समीहितम्। एवं विवरणमते साक्षात्, वाचस्पतिमते चार्थतः शुद्धब्रह्मण एव वृत्त्यज्ञानविषयत्वाच्छुद्धब्रह्मवृत्तेरेव शुद्धब्रह्माज्ञाननाशकत्वं सिद्धमिति ब्रह्मज्ञानशब्दस्य ब्रह्मान्तःकरणवृत्तिरूपार्थ एव शोभतेतराम्।

अत्र लौकिकेनासंस्कृतान्तःकरणेन ब्रह्मस्वरूपनिरूपणासम्भवेऽपि केवलं शास्त्रीयप्रक्रियया संस्कृतान्तःकरणवृत्त्यैव नित्यनिरतिशयमखण्डमपि ब्रह्मतत्त्वमनायासेनैव गृह्यते। 'यन्मनसा न मनुते', 'मनसा नानुद्रष्टव्यम्', तथा च 'दृश्यते त्वग्र्या बुद्ध्या', 'मनसैवेदमाप्तव्यम्' इत्यादिश्रुतिवाक्यान्यापातविरुद्धान्यपि सङ्गतानि भवन्ति। तल्लक्ष्यीकृत्योक्तं शङ्करेण गीताभाष्ये—

'शास्त्राचार्योपदेशादिसंस्कृतं मन आत्मदर्शने कारणम्' इति।

अथ शङ्क्यते, या वृत्तिर्ब्रह्मतत्त्वमवधारयति, कथङ्कारमेव तस्या विनाशः? तत्रोच्यते—चरमान्तःकरणवृत्तिरूपोपाधेर्निवृत्तये नान्यः कोऽप्युपायो विद्यते। स्वस्यैव स्वविनाशहेतुत्वात् स्वोपाधिभूतब्रह्माकारवृत्तेर्नैव निवर्त्तकान्तरापेक्षा। तदुक्तं वाचस्पतिना—'तस्यैव तदुपाधेर्विनश्यदवस्थस्य स्वपरोपाधिविरोधिनो विद्यमानत्वात्' इति। यद्वाऽखण्डब्रह्माकाराया विशुद्धान्तःकरणवृत्तेः समुदयेन मनोनाशे सति स्वाश्रयस्य विनाशेन स्वाश्रितस्यापि विनाशान्मनोवृत्तेरपि स्वतो नाशः स्यात्। तेन च केवलशुद्धचैतन्यरूपेणावस्थानरूपा मुक्तिरपि पदं विदध्यादिति सर्वं सुसमञ्जसम्।

वस्तुतस्तु—स्वयंप्रकाशत्वेनेन्द्रियग्राह्यत्वाभावाद् ब्रह्मणो विषयत्वमेवाद्वैतिभिर्नानुमोद्यते, द्रागेवास्य वृत्तिविषयत्वम्। यद्यप्यध्यासभाष्ये 'नायमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वादपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः' इति वाक्ये भगवता शङ्करेणाऽऽत्मनोऽस्मत्प्रत्ययविषयत्वमपरोक्षज्ञानविषयत्वं च स्वीक्रियते, तथापि तत् खलु जीवात्मविषयकमेव बोध्यम्, न तु परमात्मविषयकम्। जीवोऽपि प्रत्यगात्मभूतो नित्यशुद्धबुद्धमुक्तस्वभावः स्वयंप्रकाशमानत्वात् तत्त्वतोऽविषय एव, तथाप्यनाद्यविद्याजन्यव्यवहारकाले कर्त्तृत्वभोक्तृत्वादिसम्पादनार्थं जीवस्याहमित्यपरोक्षानुभवविषयत्वं कल्प्यते। तदुक्तं तत्र वाचस्पतिमिश्रेण—

जीवो हि चिदात्मतया स्वयंप्रकाशतयाऽविषयोऽप्यौपाधिकेन रूपेण विषय इति भावः। अपि च सर्वत्र शास्त्रे निषेधमुखाश्रयेण ब्रह्मतत्त्वप्रतिपादनाद् ब्रह्मणोऽविषयत्वमेव प्रतीयते। तच्च भाष्यकारस्य 'प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्यवेदितृवेदनादिभेदमपनयति' इत्युक्त्यैव प्रतिष्ठापितं भवति।

किञ्च, ब्रह्माकारेणाकारितान्तःकरणवृत्तेरभ्युपगमे तु ब्रह्मणः साकारत्वमेव सिद्ध्येत्, निराकारत्वं तु जह्यादेव। साकारस्यैव वस्तुन आकारेणाकारितैव भवेदन्तःकरणवृत्तिः। निराकाराकारितान्तःकरणवृत्तिस्तु कथं स्यात्? अथ चाद्वैतवेदान्तिभिर्निराकारं निर्गुणमेव ब्रह्म शुद्धमित्यास्थीयते। यद्यपि साकारमपि सगुणं ब्रह्म तावदुपास्यत्वेनाङ्गीक्रियते, तथापि ब्रह्मण उपास्यत्वाङ्गीकारे खलूपास्यस्योपासकसापेक्षतया 'एकमेवाद्वितीयम्' इति श्रुत्याम्नातस्य ब्रह्मणोऽद्वितीयत्वस्य व्याघात एव स्यादिति तस्य शुद्धब्रह्मत्वमेव प्रतिषिध्यते। तथा च श्रुतिः—

'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति (केनोपनिषद्—२।५)।

इदमत्र वक्तव्यम्—सगुणब्रह्माकारा वृत्तिरेव भवितुमर्हति, न तु कथमपि निर्गुणब्रह्माकारा वृत्तिरपि भवति। निर्गुणं तु ब्रह्म केवलमुपलब्धिगम्यं स्यात्, न त्वन्तःकरणवृत्तिगम्यम्। अत्र श्रुतेरप्यैकमत्यमस्ति। तथा च श्रुतिः —

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्॥
(कठ० उ० १।२।२३)

अत एवास्माभिर्ब्रह्मज्ञानशब्दस्य निर्दुष्टमर्थमुपस्थापयितुं पक्षान्तरमाश्रितम्। 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतिभिर्ब्रह्मण एव हि ज्ञानत्वमिष्यते, न त्वन्तःकरण-वृत्तेरपि ज्ञानत्वम्। तथा हि 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुतिभिर्ब्रह्मण एव साक्षित्वोपदेशात्, तद्भिन्नस्य तु साक्षिभास्यत्वेन जडत्वादन्तःकरणवृत्तेरपि साक्षि-भास्याया जडत्वमुपपद्यते। अतो भासकत्वाभावान्नान्तःकरणवृत्तेर्ज्ञानत्वम्। ज्ञानमेव हि सर्वदा प्रकाशशीलं भवति। यन्न भासते न तस्य ज्ञानत्वम्। तत्र प्रकाशस्वभावत्वं चेतनस्यैव युक्तम्। अन्तःकरणवृत्तेस्त्वचेतनत्वाद् विषयप्रकाशनसामर्थ्यं नास्ति। अतः कथं तस्या ज्ञानत्वम्, कथं वा तस्या अज्ञाननाशकत्वम्? किन्तु चैतन्यरूपस्य वृत्त्यु-पहितचिदाभासस्यैव भासकत्वेन ज्ञानत्वम्, ज्ञानत्वाच्चाज्ञाननाशकत्वमपि समास्थेयम्। "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इत्यादिश्रुतिभिरपि चेतनस्यैव भासकत्वम्, अतस्तस्यैव ज्ञानत्वमुपपादितम्। विद्यारण्यादिमुनिभिर्वृत्तेर्ज्ञानत्वम् अज्ञाननाशकत्वञ्च यदुपदर्शितम्, तत्तु आपाततो व्यवहारमनुरुध्यैवोक्तम्, न तु तत्त्वतः। तेन च वृत्तौ यो ज्ञानत्वव्यवहारः स त्वौपचारिक एवेति विवरणकृदभिप्रायोऽस्माक-मानुकूल्यं कृत्वा राजतेतराम्।

तस्मादत्र ब्रह्मान्तःकरणवृत्त्यवच्छिन्नचिदभिव्यक्तिरेव ब्रह्मज्ञानशब्देन विवक्ष्यते। सा चाभिव्यक्तिः शास्त्रेषूपलब्ध्यवगत्यादिपदवेदनीया भवति। यद्यप्यनभिव्यक्तं चैतन्यं नाज्ञानस्य नाशकम्; अपि त्वज्ञानस्य साधकमेव भवति, तथाप्य-भिव्यक्तचैतन्यमज्ञाननाशकं भवेत्। अत एवाज्ञाननाशकत्वेन स्वरूपचैतन्याभिव्यक्तिरेव ब्रह्मज्ञानशब्दवाच्या भवेत्, न तु चिद्वृत्तिरित्यस्माकमावेदनम्। अत्र ब्रह्मणो नित्यो-पलब्धिर्नित्याभिव्यक्तिर्वा ब्रह्माकारान्तःकरणवृत्तिरूपस्य प्रमाणस्य फलं भवति। आचार्येणोक्तं शारीरकभाष्ये—"अवगतिपर्यन्तं ज्ञानं वाच्याया इच्छायाः कर्म, फल-विषयत्वादिच्छायाः, ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म"। (ब्रह्मसूत्र–१।१।१ भाष्यम्) स्पष्टीकृतं च तत्र तद् रत्नप्रभाकारैः—"आवरणनिवृत्तिरूपाभिव्यक्तिमच्चैतन्यमवगतिः पर्यन्तोऽवधिर्यस्याखण्डसाक्षात्कारवृत्तिज्ञानस्य तदेव जिज्ञासायाः कर्म, तदेव फलम्।··· ज्ञानं वृत्तिः, अभिव्यक्तिस्तत् फलमिति भावः।

अयमभिप्रायः—ब्रह्माकारमनोवृत्तिरूपज्ञानस्य ब्रह्मस्वरूपाविर्भावं प्रति प्रमाणत्वम्। तस्य च पुरुषविचारादिसाध्यत्वेनानित्यत्वम्। चिदभिव्यक्तिरूपब्रह्मस्वरूपज्ञानं स्वतःसिद्धत्वान्नित्यमेव भवति। एवमभिव्यक्तस्वरूपज्ञानं नित्यत्वाद् यद्यपि वस्तुतो न कस्यापि प्रमाणफलं भवितुमर्हति, तथापि अभिव्यक्ततया तस्य फलत्वेनाभिधानं सङ्गच्छत एव। सर्वमेतद् विविच्योक्तं वाचस्पतिमहोदयैर्भामत्याम् (१।१।२)—"अनुभवोऽन्तःकरणवृत्तिभेदो ब्रह्मसाक्षात्कारः, तस्याविद्यानिवृत्तिद्वारेण ब्रह्मस्वरूपाविर्भावः प्रमाणफलम्, तच्च फलमिव फलमिति वेदितव्यम्" इति।

ततश्च तत्त्वतो नित्यनिरतिशयसच्चिदानन्दस्वरूपं ब्रह्मैवात्र चिदभिव्यक्तिरूपब्रह्मविज्ञानशब्दस्यार्थः। एवम्भूतब्रह्मभावस्यैव मोक्षत्वमभिमतमद्वैतवेदान्ते। तथा च श्रुतिः—"ब्रह्मविद् ब्रह्मैव भवति" (मुण्डको० ३।२।९)। भाष्यकृत उक्तिश्च—"ब्रह्मैव हि मुक्त्यवस्था" (भाष्ये–३।४।५२) इति। तस्माद् ब्रह्माभिव्यक्तेर्ब्रह्मरूपत्वादुत्पत्तिप्राप्तिविकारसंस्काराभावान्नित्यत्वमेव निवार्यते। तदुक्तं भामत्याम् (१।१।१)—"अवगतौ ब्रह्मस्वभावे नोत्पत्त्यादयः सम्भवन्ति" इति। तत्र नित्यब्रह्मस्वभावा एव हि ब्रह्मावगतिरित्याहुर्भामतीप्रस्थानविदः, अभिव्यक्तिमच्चैतन्यमिति तु विवरणप्रस्थानविदः। एवमस्मिन् विषये प्रस्थानद्वयोरपि मतैक्यमस्ति।

ब्रह्मावगतेरेव संसारकारणाविद्यानाशकारित्वात् परमपुरुषार्थसम्पादकत्वेन परमार्थत्वमेव विवक्षितम्। तदुक्तं शङ्करेण ब्रह्मसूत्रभाष्ये (१।१।१)—"ब्रह्मावगतिर्हि पुरुषार्थः, निःशेषसंसारबीजाविद्याद्यनर्थनिबर्हणात्" इति।

अत एवायं सिद्धान्तः—ब्रह्मविज्ञानपदेन श्रुतिस्मृत्यादिशास्त्रेषु चिदभिव्यक्तिः, शुद्धान्तःकरणवृत्तौ चैतन्योपलब्धिर्वा प्रतीयते, न तु जडभूताऽन्तःकरणवृत्तिरपि। अन्तःकरणवृत्तेर्ज्ञानत्वाभावाद् यथाऽज्ञाननाशकत्वं निवार्यते, तथा जन्यत्वेनानित्यत्वान्नित्यमोक्षसम्पादकत्वमपि निषिध्यते। ब्रह्मान्तःकरणवृत्तावुपचारात् कथञ्चिद् ब्रह्मज्ञानशब्दप्रयोगेऽपि तत्र साक्षान्मोक्षसाधनत्वायोगान्नैव यथार्थतो ब्रह्मज्ञानशब्दवाच्यत्वम्; किन्तु वृत्तिप्रतिफलितचिदभिव्यक्तेर्ज्ञानत्वाद् यथाऽज्ञाननाशकत्वम्, तथोत्पादविनाशराहित्येन नित्यसिद्धत्वात् तस्या नित्यनिरतिशयमोक्षप्रयोजकत्वमपीत्यतो वेदान्तवाक्यजन्यब्रह्मान्तःकरणवृत्तौ ब्रह्मस्वभावनित्यचैतन्याभिव्यक्तिरेव मोक्षसाधनब्रह्मज्ञानशब्दस्य निर्दिष्टोऽर्थ इति विदुषां परामर्शः। तथा च कीर्त्यते पराशरपुराणे –

अतः सर्वाङ्गनिष्ठस्य प्रत्यग्ब्रह्मैक्यगोचरा।
या वृत्तिर्मानसी शुद्धा जायते वेदवाक्यतः॥
तस्यां या चिदभिव्यक्तिः स्वतःसिद्धा च शाङ्करी।
तदेव ब्रह्मविज्ञानं तदेवाज्ञाननाशनम्॥ इति।

तदयमत्र निष्कर्षः—भामतीप्रस्थानमते विवरणप्रस्थानमते च ब्रह्मान्तःकरण-वृत्तिरेव ब्रह्मज्ञानशब्दस्यार्थ इति प्रसिद्धं लोके। तत्र वृत्त्युपहितं ब्रह्म वृत्तेर्विषय इति मिश्रपादमतम्। वृत्त्यनुपहितं ब्रह्म वृत्तेर्विषय इति तु विवरणमतम्। अत्राज्ञानवृत्त्युपहितत्वेऽपि ब्रह्मणो नाशुद्धत्वमवगन्तव्यम्, उपाधेः कार्यानन्वयित्वनियमेनाज्ञानवृत्त्योर्ब्रह्मण्यन्वयाभावात्। ब्रह्मण्युपाधेरध्यस्तत्वादध्यस्तगुणागुणयोरधिष्ठानेष्वनन्वयाद् वृत्त्युपहितब्रह्मणः कथमशुद्धत्वम्? अतः प्रस्थानद्वयमत एव विशुद्धब्रह्मान्तःकरणवृत्त्यैव शुद्धब्रह्मविषयकाज्ञानस्य समुच्छेदाद् ब्रह्मान्तःकरणवृत्तेरेव ब्रह्मज्ञानशब्दवाच्यत्वं सिद्ध्यति; किन्त्वस्माकमिदमावेदनं यद् ब्रह्मज्ञानशब्दस्य नायं यथार्थोऽर्थः। व्यवहारमाश्रित्यैवाऽर्थोऽयमभ्युपगतः। वस्तुतस्तु नायमलं परिग्रहीतुम्। तथा हि ब्रह्मणः स्वयंप्रकाशत्वेनेन्द्रियग्राह्यत्वाभावाद् विषयत्वमेव न स्यात्, कुतो वृत्तिविषयत्वम्? अतो ब्रह्मणो वृत्तिविषयत्वाभावाच्छुद्धब्रह्मवृत्तिरेव खपुष्पायते।

किञ्च, वृत्तेः सर्वदैव साकारवस्तुविषयकत्वनियमान्निराकारब्रह्मवृत्तेरेवासम्भवेन ब्रह्मान्तःकरणवृत्तेर्नैव ब्रह्मज्ञानशब्दवाच्यत्वम्। अपि च साक्षिभास्याया अन्तःकरणवृत्तेर्जडत्वेन भासकत्वाभावान्नैव ज्ञानत्वम्, ज्ञानत्वाभावाच्च नाप्यज्ञाननाशकत्वमित्यतो ब्रह्मान्तःकरणवृत्तिर्नैव ब्रह्मज्ञानशब्दार्थो भवेत्; किन्तु चैतन्यरूपस्य वृत्त्युपहितचिदाभासस्यैव भासकत्वेन ज्ञानत्वम्, ज्ञानत्वाच्चाज्ञाननाशकत्वमित्यास्थेयं विबुधैः। तत्राऽनभिव्यक्तचैतन्यस्याज्ञाननाशकत्वासम्भवेऽप्यभिव्यक्तचैतन्यस्याज्ञाननाशकत्वाच्चिदभिव्यक्तेरेव ब्रह्मज्ञानत्वमापद्येत। अस्मिन्नर्थे भामतीविवरणकारयोरप्यैकमत्यमस्ति, तथा श्रुतिस्मृतिपुराणादीनामप्यस्ति तदेवैदम्पर्यम्। तस्माद् वेदान्तवाक्यजन्यशुद्धब्रह्मान्तःकरणवृत्तिप्रतिबिम्बिता ब्रह्मस्वरूपा नित्या चैतन्याभिव्यक्तिरेव ब्रह्मज्ञानशब्दवाच्या भवेत्, न तु कथमपि जडभूताऽनित्या ब्रह्मान्तःकरणवृत्तिरित्यलं विस्तरेण।

# वेदेषु यजुषां शुक्लत्वं कृष्णत्वञ्च

डॉ० देवेन्द्रनाथत्रिपाठी
प्राध्यापकः, संस्कृत-विभागस्य
स्वामीदेवानन्द-स्नातकोत्तरमहाविद्यालये
मठ-लार, देवरिया

❀ ❀ ❀

सृष्टिप्रपञ्चस्य प्रवर्तिका प्राथमिकी वाणी वेदरूपा विश्रुता[1]। किमधिकम्, स्थावरजङ्गमात्मकस्य जगतः सर्वथा धारणं पोषणं च शब्दरूपेणावस्थितो वेदपुरुष एव करोति[2]। आधुनिके वैज्ञानिके युगेऽप्यखिलस्य भूभागस्य प्राचीनतमो ग्रन्थो वेद एवेति विद्वांसो मन्यन्ते। अनिवार्यसंस्कृतेः सभ्यतायाश्च निर्धारणं वेदं विना न शक्यम्। पुनश्च प्राक्तनत्वाद् वेदानां समस्तानां संस्कृतीनामवबोधोऽप्यस्मादेव भवति। अतो विश्वस्य जगतो मानवजातेरितिवृत्तस्य, सभ्यताया भाषावैज्ञानिकविश्लेषणस्य चाववोधाय वेदानामनिवार्यताऽपरिहार्या। भारतीयाः शास्त्रविदो विद्वांसः स्वमत-पुष्ट्यर्थं प्रमाणरूपेण वेदवाक्यमेव समुपस्थाप्यात्मतोषमनुभवन्ति। बहवः पाश्चात्य-मनीषिणोऽपि वेदवाङ्मयानुशीलने कृतजीवनोत्सर्गाः "ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति प्राक्तनमुद्घोषं परिपोषयन्ति।

सामान्यतया मन्त्रब्राह्मणरूपौ द्वौ भागौ वेदस्य स्तः[3]। संहितायां पठितानां मन्त्राणां प्रायशो यज्ञकर्मणि प्रयोगो विहितः[4]। तैत्तिरीयसंहिताभाष्य आचार्यभट्ट-भास्करः स्वीकरोति यत् कर्मणि विनियुक्तानां मन्त्राणां व्याख्यानग्रन्था ब्राह्मणत्वेना-ख्यायन्ते[5]। याज्ञिकवर्णनपरो भागो मन्त्रस्तदतिरिक्तो ब्राह्मणपदाभिधेय इति मीमांसका मन्यन्ते[6]।

---

१. यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै। ( श्वे० उ० ६।१८ )
२. सर्वं वेदात् प्रसिद्ध्यति। ( म० १२।९७ )
बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम्। ( म० १२।९९ )
३. मन्त्रब्राह्मणयोर्वेदनामधेयम्। ( आप० प० ३०, सत्या० श्रौ० १।१७, बौ० गृ० २।६।३)
४. अपि च यज्ञकर्मणि संहितयैव विनियुज्यन्ते मन्त्राः। ( निरु० १।७, दुर्गभाष्यम् )
५. ब्राह्मणं नाम कर्मणस्तन्मन्त्राणां च व्याख्यानग्रन्थः। ( तै० सं० १५।१ भाष्ये )
६. तच्चोदकेषु मन्त्राख्या, शेषे ब्राह्मणशब्दः। ( जै० २।१।३२-३३ )

प्राचीनभारतीयसंस्कृतवाङ्मयानुशीलनेनेदमवगृह्यते यत् सृष्टेरादिकाले ऋग्यजुःसामाथर्वात्मको वेद एकत्रैव सम्पृक्त आसीत्। पुरा सत्ययुगादौ सम्पृक्तस्यैकरूपस्यैव वेदस्याध्ययनाध्यापनं प्रसृतम्। द्वापरस्यावसाने कलियुगे मर्त्यानां बुद्धिदौर्बल्यमुररीकृत्य ब्रह्मपरम्परया एकात्मकस्यैव वेदस्य महर्षिव्यासो विभागचतुष्टयं चकार[1]।

एतेषु चतुर्षु वेदेषु होत्रकर्मवर्णनपर ऋग्वेदः, आध्वर्यवकर्मोपयोगिनां मन्त्राणां संग्राहको यजुर्वेदः, औद्गात्रकर्मवर्णनरतः सामवेदस्तथा शान्तिकपौष्टिकादिप्रेप्सितकर्मवर्णनात्मकोऽथर्ववेदो विश्रुतः[2]। सप्तविंशतिर्वेदविभागकर्त्तारो वेदव्यासा बभूवुरिति ब्रह्माण्डपुराणानुशीलनेनावस्थितम्[3]; परन्तु साम्प्रतिकमुपलभ्यमानं विभजनं पराशरात्मजेन कृष्णद्वैपायनेन कृतमिति भागवतपुराणे वर्णितम्[4]।

ऋगादिचतुर्षु वेदेषु ऋग्वेदस्यैव प्राथम्यम्[5]; परन्तु प्राथम्यमिदं वेदाध्ययनतत्परायणब्रह्मयज्ञजपादावेव विद्यते, न तु यज्ञकर्मणि[6]। यज्ञकर्मणि तु यजुर्वेदस्यैव प्राधान्यम्[7]। वेदा हि यज्ञार्थमभिप्रवृत्ता इत्युक्तिमनुसृत्य वेदेषु यजुर्वेदस्य महत्त्वं दुर्वारम्। यजुश्शब्दो देवपूजासङ्गतिकरणदानार्थकेन यजधातुना निष्पादयति निरुक्तकृद् यास्काचार्यः—यजुर्यजतेरिति[8]। यजुर्वेदे प्रायशो गद्यात्मका एव मन्त्राः समाम्नाताः। अतः प्राचीनाचार्या एवमामनन्ति—वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठितमन्त्रा यजूंषि, शेषे यजुश्शब्दः इत्यादि। ऐतिहासिकपक्षावलम्बनेऽपि धार्मिक इतिहासे नूतनयुगस्यारम्भणं यजुर्वेदस्याविर्भावेण विद्वांसो मन्यन्ते। अतो याज्ञिकदृष्ट्यैतिहासिकदृष्ट्या चोभयथैव यजुर्वेदस्य वैशिष्ट्यं दुर्वारम्।

यजुर्वेदस्य ब्रह्मादित्यभेदेनास्ति सम्प्रदायद्वैविध्यम्। तत्र ब्राह्मणपरम्पराप्राप्तः कृष्णयजुर्वेदः, आदित्यपरम्पराधिगतः शुक्लयजुर्वेदः[9]। जगतीतल आदित्यपरम्परया

---

१. चतुर्युगेष्वथ व्यस्ता द्वापरान्ते महर्षिभिः ( भाग० १२।६।४६ )
वेदान् महर्षयो व्यस्यन् हृदिस्थाच्युतचोदिताः ( तदेव—११।६।४७)।

२. ऋग्वेदसंहिता—१०।७११; निरुक्तम्—१।८।

३. ब्र० पु० २।३५।११६–१२४, वा० पु० अ० १३।

४. भाग० १२।६।४८–४९।

५. तै० सं० ६।५।१०।३, ऋ० सं० १०।९।९, छा० उ० ७।१।२।

६. ऋ० भा० भूमिका सायणीया।

७. ऋ० सं० १०।७१।७१।

८. निरु० ७।१२।

९. वेदस्य सम्प्रदायो द्विधा मतः। ब्रह्मणः सम्प्रदायस्तु आदित्यस्य तथा मतः।
( जाबालि-सं० अ० १ )

प्रसृतानां शुक्लयजुषामध्ययनं याज्ञवल्क्यर्षिणा सूर्यात् कृतमिति शतपथश्रुत्या निश्चीयते[1] । वेदव्यासाद् वैशम्पायनस्तस्माच्च याज्ञवल्क्यो यजुर्वेदमधीतवान् । केनापि कारणेनासन्तुष्टो वैशम्पायनो गुरुर्मदधीतं त्यजेदिति याज्ञवल्क्यमादिदेश । याज्ञवल्क्योऽपि गुरुनिदेशमुरीकुर्वन्नधीतयजुषां वमनं चकार । वमने कृते सत्यपरैरन्तेवासिभिस्तद् गृहीतम् । इदमेव कृष्णयजुषां कृष्णत्वं पौराणिकाः समामनन्ति । तदनन्तरं शुक्लयजुषामध्ययनं सूर्याद् याज्ञवल्क्येन कृतम्, परन्तु यजुषां कृष्णत्वे बुद्धिमालिन्यप्रयुक्तमिदमेव कारणमिति निश्चेतुं न हि विश्राम्यति मनो यतो हि भ्रमप्रमादादिदोषरहितोऽपौरुषेयो वेदः । अतोऽत्र कृष्णत्वप्रयुक्तानि कानिचिन्नूतनानि कारणानीतस्ततः समागतानि संगृह्यन्ते—

१. कृष्णयजुर्वेद एकस्यैव मन्त्रस्य कल्पसूत्रभेदेन विनियोगवैविध्यम् । यथा प्रथमकण्डिकायाम्[2]—"ध्रुवा अस्मिन् गोपतौ स्यात्" इत्यादि मन्त्रो बोधायनेन यजमानावेक्षणे विनियुक्तः, गवां प्रत्यावर्तने चापस्तम्बेन । एवं बहुविधप्रयोगसाङ्कर्याद् यजुषां कृष्णत्वं तदभावे च शुक्लत्वम् ।

२. तैत्तिरीयसंहितायां मन्त्रब्राह्मणयोः सम्मिश्रणमस्ति । छन्दोबद्धा मन्त्राः गद्यात्मकानि च ब्राह्मणानि चैकत्रैव कृष्णयजुर्वेदसम्पृक्तानि । शुक्लयजुर्वेदे तु सम्मिश्रणमिदं नावलोक्यते । अतोऽयमपि शुक्लत्वकृष्णत्वप्रयोजकोऽपरो हेतुर्विद्वद्भिः स्वीक्रियते ।

३. कृष्णयजुषामुच्चारणमतीवाकर्षकमतो युज्यते भ्वादिगणपठितात् कृष्धातोर्यजुषां कृष्णत्वम् । "तैत्तिरीया इति यजुश्शाखा आसन् सुपेशलाः[3]" इत्युक्त्या कृष्णयजुषां सुपेशलत्वं विशेषमवबुध्यते ।

४. वेदोपाकर्मणि वाजसनेयिनः श्रावणशुक्लचतुर्दशीयुतां पूर्णिमां गृह्णन्ति । तैत्तिरीयास्तु भाद्रकृष्णपक्षस्य प्रतिपद्युक्तं कालमुपाददते । अत उपाकर्मप्रयुक्तः शुक्लत्वकृष्णत्वहेतुः ।

५. तैत्तिरीयाणामृषि-देवता-छन्दोबोधकस्य ग्रन्थस्यास्तव्यस्तत्वादपि कृष्णत्वमस्याविष्करोति; परन्तु शुक्लयजुर्वेद इयमव्यवस्था न हि दरीदृश्यते ।

६. तैत्तिरीये निन्दामुखेन कर्त्तव्यविधानं कृष्णत्वप्रयोजकम् । यथा—यं कामयेत पापीयान् स्यादित्येकैकं तस्य जुहुयाज्जिह्मस्तिष्ठन्[4]—इत्यादि ।

---

१. आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ।
( श० ब्रा० १४।९।४।३३ )

२. तै० सं० १।१।१; बौ० श्रौ० १।१; आ० श्रौ० १।२।९ ।

३. १२।६।६५ । ४. आ० श्रौ० १६।१।१५ ।

७. तैत्तिरीयके द्विविधः पाठः—सारस्वतश्चार्षेयः। अतः पाठद्वैविध्येनापि नियतक्रमविरहितत्वादस्य कृष्णत्वम्, तद्विपरीतं पाठद्वैविध्याभावाद् यजुषां शुक्लत्वम्।

८. मन्त्रस्यापूर्णत्वमपि यजुषां कृष्णत्वप्रयोजकम्। आपूर्तिस्तु कल्पसूत्रेण क्रियते, तथैवानुतिष्ठन्ति याज्ञिकाः। यथा 'संवपामि[1]' इत्यस्य मन्त्रस्यापूरणं कल्पानुसारेण देवस्य त्वेत्यादिना यथा दैवतं क्रियते। शुक्लयजुषि मन्त्रप्रयोगे कल्पापेक्षा न हि विद्यते,, अतोऽस्य शुक्लत्वम्।

९. शुक्लयजुर्वेदाविर्भावात् पूर्वं या शाखा जनेषु प्रसृता, साऽप्रसिद्धत्वाद् यातयामा। यातयामत्वाद् यजुषां कृष्णत्वमिति केचन स्वीकुर्वन्ति[2]।

परन्त्वियं विचारणा न समीचीना। यतो हि पुराणत्वाद् यजुषां यातयामत्वमप्रसिद्धत्वञ्चानुभवविरुद्धम्। यदि पूर्वत्वादप्रसिद्धत्वादिदोषस्तैत्तिरीये समापतति, स एव यजुषां कृष्णत्वप्रयोजकस्तर्हि सम्प्रति हि सर्वेऽपि वेदा अप्रसिद्धत्वाद् यातयामास्तथा कृष्णत्वदोषदुष्टा इति मे मतिः।

यजुषां शुक्लत्व-कृष्णत्वप्रयोजकोऽवितथो धर्मः कः? इति निश्चेतुं न शक्यते, यतो हि श्रुतिरेव भगवती तदर्थोपगमे नः शरणम्, सुधीजना वितरन्त्येव मह्यं मामकीनं दोषम्, यतो हि—'प्रायेण मुह्यन्ति हि ये लिखन्ति[3]' इति।

---

१. तै० सं० १।१।८।

२. वेदशाखापर्यालोचनम्, पृ० ३५।

३. माणिक्यचन्द्रः।

# शिल्पशास्त्रे रसविमर्शः

डॉ० पारसनाथद्विवेदी
साहित्य-संस्कृति-संकायाध्यक्षचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀❀❀

शिल्पं कलादि कर्म। प्रत्येकं मानवनिर्मितिः कला। मानवनिर्मितिरियं कला तावदीश्वरसृष्टेः प्रकृतेरनुसारेण निर्मीयते। कलाकारहृदये ये भावा याः कल्पनाश्च विद्यमानाः सन्ति, कलाकारस्तेषां भावानां प्रतीकात्मकरूपान्तरणं करोति। वात्स्यायन-विरचिते कामसूत्रे चतुःषष्टिकला निर्दिष्टास्तत्र साहित्य-सङ्गीत-वास्तु-मूर्त्ति-चित्रकला ललितकलाः कथिताः; किन्त्वत्र कलाशब्देन वास्तु-मूर्त्ति-चित्रकला गृहीताः सन्ति।

कलाकारः स्वकल्पनालोके चिन्तितं रूपं सर्जनात्मककल्पनयाऽभिव्यक्तीकर्तुं सर्जनप्रेरणामनुभवति। स एकस्मिन्नचेतने प्रस्तरखण्डे यत्तस्य विषयस्तस्मिन् स्वौत्सुक्यपूर्णैकाग्रतायाः प्रयोगं विदधाति। यदा स तस्मिन् प्रस्तरखण्डे सर्जनाद्यनुरूपं स्वमनसि चिन्तितं रूपं बिम्बं वा पश्यति, तदा तस्यान्तर्ज्ञानं प्रत्यक्षज्ञानं भवति। तदनन्तरं विषयविषयिणावेकरूपतामेत्य कार्यं कुरुतः। सर्जनात्मकप्रक्रियायामस्यां विषयरूपा सामग्री वस्तुतो मनःस्थितं भावं रूपं वा सङ्केतयति रूपगतां साधनादि-प्रक्रियामपि निरूपयति।

यदा कलाकारस्य मनःस्थितो भावो बिम्बो वा पूर्णतः प्रत्यक्षरूपतामेति, तदा स कलावस्तु भवति, तदा कोऽपि प्रत्यक्षज्ञाता कलानिर्माता वस्त्वन्तर्हितस्य प्रत्यक्ष-ज्ञानस्य प्रतीतिं कुरुते। यदा तु विषयविषयिणावौत्सुक्यपूर्णैकाग्रतायाः सक्रियप्रक्रिया-यामेकरूपतामितः, द्वावेव परस्परं विलीयेते, तदा द्वयोर्द्वैतभावं विनश्यति। तदा एवं-विधयाऽनुभूत्या प्रत्यक्षज्ञाता कलानिर्माता विषयी परमानन्दं प्राप्नोति। एवमुच्यते यदनेन प्रत्यक्षज्ञातर्येकमेवंविधं मनोदैहिकरूपान्तरणं भवति यद् रसभावावुच्येते। रसभावयोरियमनुभूतिः सौन्दर्यानुभूतेः साररूपतयोच्यते। मानसिक-काल्पनिकसक्रिय-तायाः सौन्दर्यात्मकानुभूते रचनात्मकशक्तेश्च समवेतरूपा हि कला। कलाकृतिश्चैका मूर्त्तिरेका कल्पनाऽनुभूतभावानां प्रत्यक्षीकरणं च। कला प्रकृतरूपेण विद्यमानानामन्त-र्दृष्टीनां मूर्त्तीकरणमस्ति। मूर्त्तिश्च सा कलाकृतिरस्ति या स्वयमात्मानं निजकल्पना-

शक्त्याऽभिव्यनक्ति, या स्वयमेकसत्ता शक्ता गतिमती प्राणै रूपैश्चानुप्राणिता जीवनस्याभिव्यक्तिरेका प्रस्तुतिरस्ति। सा न जागतिकपदार्थस्य बाह्याकृतेरनुकृतिरपि त्वनुसृतिरस्ति। यत्र सुखदुःखादिद्वन्द्वाद्विनिर्मुक्तः कलाकारः स्वयमात्मानमपि विस्मृत्य कलाकृत्या सहैकरूपतामेत्य तादात्म्यमनुभवति, सैव परमानन्दस्यानुभूतिर्भवति। साऽनुभूतिरेव शिल्पशास्त्रे रस उक्तः।

मानवहृदये वासनारूपेण विद्यमाना भावाः स्थायिशब्दव्यपदेश्या वास्तुमूर्तिचित्रकलावलोकनेनोद्बुद्धा रसरूपतामाप्नुवन्ति। त एव शिल्परसाः प्रदिष्टाः। भारतीयशिल्पकलायाः प्रत्यङ्गं रसात्मकं भवति। शिल्पकलायां रसेनैको विलक्षणोऽलौकिकोऽनिर्वचनीय एवानन्द उपलभ्यतेऽत एव शिल्पकलाऽऽनन्दात्मिका भवति। आनन्दरसस्य प्रदानमेव कलाया मुख्यमुद्देश्यमस्ति। कलाकारो हि योगीव ध्यानावस्थितः सन् कलायां रसमाधातुं शक्नोति। साहित्ये रसानुभूतिः काव्यरसास्वादनाय भवति, कलायां रसाभिव्यक्तिस्तु तत्र जीवनं प्रादात्। आस्वादमतिरिच्य तत्र सजीवता जायते। कलाकारो हि तत्र जीवनमादधाति।

प्रथमं भरतमुनिना नाट्यशास्त्रे 'कोऽसौ रसः' इति प्रश्नमुत्थाप्य 'आस्वाद्य एव रसः' इत्युक्तम्। अग्निपुराणे चैतन्यरूपस्य ज्योतिर्मयस्य परब्रह्मणः सहजानन्दरूपाभिव्यक्ती रस उक्तः[१]। अग्निपुराणेन प्रभावितो विश्वनाथो रसमूलं चमत्कार एव मनुते—"रसे सारश्चमत्कारः[२]"। तन्मते तु रसः सहृदयसंवेद्योऽलौकिको काव्यार्थ इत्युच्यते; किन्तु न सर्वैरास्वाद्यते स रस इति। स एवानुभूयते यस्य हृदये सत्त्वोद्रेको भवति रजस्तमोभ्यां संस्पर्शरहितं मनः सत्त्वमुच्यते। सत्त्वोद्रेकात् सहृदयैरनुभूयते रसः। इयमनुभूतिरेवानन्दः, आनन्द एव रसः।

भोजदेवेनात्मज्ञानमात्मप्रतीतिर्वा सहजानन्दरूपो रसः कथितः। तेन च काव्यकलायामिव शिल्पकलायामपि रसोन्मेषस्य परिपाटी प्रकल्पिताऽत एव तेन स्वीये समराङ्गणसूत्रधारे पृथग्रूपेण शिल्परसचर्चा कृता। विष्णुधर्मोत्तरपुराणानुसारेण कलाकृतिषु समयानुरोधाद् रसस्य समावेशो जातोऽत एव कलायां रसोन्मेषस्य प्रश्नः समुत्थितः। रसोन्मेषेण कलाकृतिषु सजीवता जायतेऽत एव मूर्त्तिनिर्माता स्थपतिः मूर्त्तौ रसानां रसदृष्टीनां वोन्मेषेणास्पष्टाव्यक्तसङ्केतितानां भावानामभिव्यक्तये सततं प्रयत्नशीलो भवति। रसोन्मेषस्येयं परिपाटी प्राचीनवास्तुमूर्त्तिचित्रकलासूपलभ्यते। एवं हि कला मानसमानन्दं सृजति, सौन्दर्यमनुसन्दधाति, रसाननुभावयति च।

---

१. अग्निपुराणोक्तं काव्यालङ्कारशास्त्रम्—४।१-२।

२. साहित्यदर्पणः, तृतीय-परिच्छेदः।

शिल्पशास्त्रे 'शिल्पस्यात्मा चमत्कारः' इति स्वीकृतं शिल्पाचार्यैः । रसश्च चमत्कारापरपर्यायः । अग्निपुराणानुसारेण परब्रह्मणः सहजाभिव्यक्तिरेव चैतन्य-चमत्काररसाह्वयं[1] भजतेऽत एव चैतन्यरूपश्चमत्कार एवात्मा शिल्पस्येति प्रकल्पितं शिल्पशास्त्रे । स एव चमत्कारश्चाश्रयभेदेन विविधरूपतां धत्ते—कदाचिदलङ्काररूपेण, कदाचिद्रसरूपेण, कदाचिच्चैतन्यरूपेण च । रसरूपेणासावेकोऽलौकिकश्चमत्कारः । स एव निवृत्त्याऽऽनन्दश्चमत्कारापरपर्यायः सर्वत्र सारभूतो रसास्वादनचमत्कारादि-व्यपदेश्यो विलक्षण एव । यथा चोक्तमभिनवभारत्यामलौकिकचमत्कारात्मा रसास्वादो विलक्षणः । अभिनवगुप्तमतानुसारेण सकलविघ्नविनिर्मुक्ता संवित्तिरेव चमत्कारः । स च चमत्कारो रसनास्वादनचमत्करणभोगसमापत्तिलयविश्रान्त्यादिशब्दैरभिधीयते[2] । एवं च चमत्कारैकप्राण आत्मानन्दरूपाखण्डरसानुभूतिरेवास्वादनमास्वादनमेव चमत्कारश्चमत्कार एव रसो रस एवानन्दः, आनन्द एव चमत्कारश्चमत्कार एव शिल्पस्यात्मेति फलितम् । स च न केनापि वर्णितुं शक्यते, न केनापि सञ्चार्यते, न केनाप्यनुमीयते, नाभिव्यज्यते; अपि त्वनुभूयते । एवं चानुभूतेर्विषयः सः । अत एवाऽनिर्वचनीयोऽसञ्चरणीयोऽलौकिकश्चमत्कारो रसो वा ।

यथा काव्यस्यात्मा रसस्तथैव शिल्पस्यात्माऽपि रसः; किन्तु ये सिद्धान्ताः ( Norms ) सम्बोधाश्च ( Concepts ) काव्यरसविषये निर्णीतास्ते शिल्परसविषये न प्रयुक्ता भवन्ति । काव्यनाट्ययोर्यस्य हृदये भावाः समुद्भवन्ति, स एवाश्रयो भवति, शिल्पे तु दर्शकः स्वयमेवाश्रयो भवति, मूर्त्तिश्चित्रं वालम्बनम् । काव्यगता अनुभावा अपि शिल्पे न भवन्ति । अनुभावो हि भावपरिणामः । भावश्च दर्शकहृदये समुद्भवत्यतस्तत्परिणामेनापि दर्शकहृदये भवितव्यम् । येन भावा उद्दीप्यन्ते तेऽनुभावाः । येनानुभावस्वरूपो निर्मीयते, ते सञ्चरणशीलत्वात् सञ्चारिभावाः कथ्यन्ते । एभिरेव भावानुभावसञ्चारिभिः सहयोगेन स्थायिभावो रसरूपतामेति । एवं शिल्परससन्दर्भे प्रमाणानां ( सिद्धान्तानां ) सम्बोधानां च महत्त्वं स्वीकृतमेव । शिल्परसानुभूतौ सौन्दर्य-बोध आवश्यकः ।

---

१. अग्निपुराणोक्तं काव्यालङ्कारशास्त्रम् —४।१-२ ।

२. (क) आनन्दो निवृत्त्यात्मा चमत्कारापरपर्यायः । ( ध्वन्यालोकलोचनम्—अभिनवगुप्तः )
(ख, अलौकिकश्चमत्कारात्मा रसास्वादः स्मृत्यनुमानलौकिकस्वसंवेद-विलक्षण एव ।
( अभिनवभारती–षष्ठोऽध्यायः )
(ग) सकलविघ्नविनिर्मुक्ता संवित्तिरेव चमत्कारनिर्वेशरसनास्वादनभोगसमापत्तिलय-विश्रान्त्यादिशब्दैरभिधीयते ।
( अभिनवभारती—षष्ठोऽध्यायः–रससूत्रव्याख्या )

आनन्दवर्धनाचार्येण 'ध्वनिरात्मा काव्यस्य[1]' इत्यभिहितम्। तत्र 'कोऽसौ ध्वनिः' ? उच्यते—'सौन्दर्यबोधो ध्वनिर्वा सौन्दर्यात्मकोऽर्थो ध्वनिः' । ध्वनिसिद्धान्तानुसारेण काव्यकृतेर्द्वावर्थौ—वाच्य-प्रतीयमानौ[2] । तत्र वाच्योऽर्थः स्पष्टार्थः (बाह्यार्थः)। वाच्यार्थेन जनितो ध्वनितो वार्थः प्रतीयमानोऽर्थः । प्रतीयमानार्थश्च व्यङ्ग्यार्थ आन्तरिकोऽर्थो वा। व्यङ्ग्यार्थः कदापि स्पष्टार्थो न भवति, स कदापि वाच्यतां न याति। अभिधा व्यङ्ग्यार्थं बोधयितुं न शक्या । व्यङ्ग्यार्थः (आन्तरिकोऽर्थः) कल्पनायामनुभूतौ वा निहितो भवत्यत एव स 'निहितार्थं' इत्युच्यते। विष्णुधर्मोत्तर-पुराणे मूर्त्तिकलायाश्चित्रकलायाश्च विषये द्वावर्थौ प्रतिपादितौ—दृष्टमदृष्टं च। तत्र रेखा-स्थानायतनरङ्गादयो बाह्योऽर्थः स्पष्टार्थश्च 'दृष्टम्' उच्यते । दृष्टद्वारा सङ्केतितो जनितो वार्थः (बाह्यार्थजनितो ध्वनितो वार्थः) आन्तरिकोऽर्थः 'अदृष्टम्' उच्यते। स एवान्तरिकोऽर्थोऽनुभूतिः सौन्दर्यबोधो वा भवति। अनुभूतिरेव ध्वनिरुच्यते। एवं च दृष्टेन जनितो ध्वनितो वार्थः सौन्दर्यबोधोऽनुभूतिर्ध्वनिरदृष्टं वा। स एव रसः। रस एव सौन्दर्यबोधोऽनुभूतिश्च । अनुभूतिरेव रसः।

इयमनुभूतिरेकाऽद्वितीयाऽवर्णनीयाऽसञ्चरणीयाऽलौकिकी च। अनुभूते रसस्य कदापि वर्णनं सञ्चरणं न भवति। सञ्चरणं तु भावानां भवति। ये भावाः सञ्चरणशीलाः, ते सञ्चारिभावा उच्यन्ते । एवमनुभूतिः केवलमनुभवस्य विषयः। अनुभूतेः सञ्चरणं न न भवत्यत एवानुभूतेर्मनःस्थितेर्वोद्बोधनं ध्वनिना क्रियते । एवमनुभूतेर्मनःस्थितेश्च लब्धो भावार्थो रसध्वनिरुक्तः। वस्त्वलङ्कारावनुभावितार्थावबोधने रसध्वनेरन्यदुपादान-द्वयम्। एवमनुभावितार्थबोधनाय वस्त्वलङ्काररसध्वनिरूपाणि त्रीण्युपादानानि सन्ति; किन्तु रसध्वनीनामेव श्रेष्ठत्वमुक्तम्। वस्त्वलङ्कारध्वनी तु रसं प्रति पर्यवस्येते[3] । तेन रस एव वस्तुत आत्मा शिल्पस्य। सर्वत्र रसध्वनेरेवात्माभावः[4] । कलाकारेण वस्त्व-लङ्काराभ्यां निर्मितस्थित्या दर्शकानां चेतस्यन्तर्हिताऽनुभूतिजगिरिता भवति । साऽनुभूति-रेव रसः। स एव सौन्दर्यानन्दः । तस्य सौन्दर्यानन्दस्यानुभूतिरास्वादो रसो वा।

रसो हि मूलतो मानसी स्थितिः। स न वस्तुतो विषयगतोऽपि तु विषयिगतो भवति। यतस्तस्यानुभूतिः सहृदयहृदये जायतेऽत एव सहृदयैरास्वाद्यते रसः। एवञ्चानु-भूतिरास्वादरूपो भवति। अपरे च रसं विषयगतं मन्यन्ते। तन्मते रसोऽनुभूतेर्विषय आस्वाद्यरूपो भवति। यथा चोक्तं भरतेन—"रस इति कः पदार्थः ? उच्यते—आस्वाद्य-त्वात्[5]"; किन्तु लुप्तप्रायमेतन्मतम्। वस्तुतस्तु 'आस्वाद एव रसः' न त्वास्वादस्य विषय आस्वाद्यरूपोऽस्ति रसः। आस्वाद्यास्तु विभावादयो विषयाः, एवं चास्वादरूपो रसो न

१. ध्वन्यालोकः—१।१;          २. तदेव—१।४।
३. ध्वन्यालोकलोचनम्—१।५;          ४. तदेव।
५. अभिनवभारती—षष्ठाध्यायः—रससूत्रव्याख्या।

विषयगतोऽपि तु विषयिगतो भवति। एवं सहृदयैरलौकिकविभावादिरूपस्य विषयस्यास्वादनमेव रसः। आस्वादनं च मानसव्यापारः। स चालौकिकचमत्कारात्मा रसास्वादः स्मृत्यनुमानलौकिकस्वसंवेदनविलक्षण एवेत्यभिनवगुप्तपादाः[1]। रसास्वाददृष्ट्या रस एकः सन्नपि नवधा मतः। शिल्पशास्त्रे नवैव रसाः प्रतिपादिताः। यथा चोक्तं विष्णुधर्मोत्तरे—

शृङ्गारहास्यकरुणवीररौद्रभयानकाः।
बीभत्साद्भुतशान्ताश्च नव चित्ररसाः स्मृताः॥
(वि० ध० पु० ४३।१)

समराङ्गणसूत्रधारे च—

शृङ्गारहास्यकरुणा रौद्रप्रेयोभयानकाः।
वीर(प्रत्ययार्थौ) च बीभत्सश्चाद्भुतस्तथा।
शान्तश्चैकादशेत्युक्ता रसाश्चित्रविशारदैः॥ (स० सू० ८२।२-३)

चित्रमत्र शिल्पं चित्तस्य चिन्तनमस्ति (चित्तं चित्तेनेव चिन्तति)। चित्रशब्देनात्र 'चित्रकला-मूर्त्तिकला' इत्यनयोर्द्वयोर्ग्रहणं भवति। संस्कृते चित्र-मूर्तिकले चित्रपदेनाभिधीयेते। चित्ते चेतनायां वा प्रकृतरूपेण विद्यमानस्य यस्य कस्यचिदपि प्रत्यक्षीकरणं मूर्तीकरणं वा चित्रमुच्यते। चित्ते यच्चिन्तितं तदेव चित्रमूर्त्तिरूपेण प्रत्यक्षीक्रियते शिल्पकारैः। एवं 'चित्ररसाः स्मृताः' इत्यनेन 'मूर्त्तिरसाः स्मृताः' इत्यपि गृह्यतेऽत एव शिल्परसाः प्रोक्ताः।

विष्णुधर्मोत्तरे नव शिल्परसा निर्दिष्टाः। समराङ्गणसूत्रधारे तु भोजदेवेनैकादश रसाः स्मृताः; किन्तु वीरादनन्तरमेकस्य नाम विलुप्तम्। समराङ्गणे शृङ्गारहास्यकरुणरौद्रप्रेयोभयानकवीरशान्ताश्चेति दश रसा लक्षिताः। एको रसोऽस्पष्टः। तस्य लक्षणमपि नोपलभ्यते। बीभत्सलक्षणमपि लुप्तं वर्तते तत्र। अद्भुतरसस्य लक्षणमपूर्णमुपलभ्यते। शिष्टा रसा लक्षिताः। विष्णुधर्मोत्तरे शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतशान्ताख्या नवैव रसा उक्ता लक्षिताश्च। तत्र प्रेयोलक्षणं नोक्तम्। तत्र शृङ्गाररसलक्षणमुक्तं समराङ्गणसूत्रधारे—

सभ्रूकम्पकटाक्षश्च तथा प्रेमगुणान्वितः।
यत्रेष्टे ललिता चेष्टा स शृङ्गारो रसः स्मृतः॥ (स० सू० ८२।४)

विष्णुधर्मोत्तरपुराणे—

तत्र यत्कान्तिलावण्यलेखामाधुर्यसुन्दरम्।
विदग्धवेशाभरणं शृङ्गारे तु रसे भवेत्॥ (तदेव—४३।२)

---

१. अभिनवभारती—षष्ठाध्यायः—रससूत्रव्याख्या।

हास्यरसलक्षणम्—

विकासिललितापाङ्गो मृदु च स्फुरिताधरः ।
लीलया सहितो यश्च स हास्यो रस उच्यते ॥ ( स० सू० ८२।५ )

यत्कुब्जवामनप्रायमीषद्विकटदर्शनम् ।
वृथा हि हस्तं सङ्कोच्य तत् स्याद्धास्यकरं रसे ॥
( वि० ध० पु० ४३।३ )

करुणरसलक्षणम्—

अश्रुक्लिन्नकपोलान्तः शोकसंकुचितेक्षणः ।
चित्तसन्तापसंयुक्तः प्रोच्यते करुणो रसः ॥ ( स० सू० ८२।६ )

याच्ञाविरहसंत्यागविक्रयव्यसनादिषु ।
अनुकम्पितकं यत् स्याल्लिखेत्तत्करुणे रसे ॥
( वि० ध० पु० ४३।४ )

रौद्ररसलक्षणम्—

निर्मार्जितललाटान्तः संरक्तोद्वृत्तलोचनः ।
दन्तदष्टाधरोष्ठो यः स रौद्रो रस उच्यते ॥ ( स० सू० ८२।७ )

पारुष्यविकृतिक्रोधविषस्त्यर्थान्निदूषणम् ।
दीपप्रशस्त्राभरणवत्कृतं रौद्ररसे भवेत् ॥
( वि० ध० पु० ४३।५ )

वीररसलक्षणम्—

अष्टावस्तम्भसम्भेद्याः ( ? ) सूत्रसंकुचितानतः ।
धैर्यवीर्यबलोत्पन्नाः स वीरस्तु रसः स्मृतः ॥ ( स० सू० ८२।१० )

प्रतिज्ञागर्भशौर्यादिष्वर्थेष्वौदार्यदर्शनम् ।
सस्मयं सभ्रुकुटिवद्वीरं वीररसेऽद्भुतम् ॥
( वि० ध० पु० ४३।६ )

भयानकरसलक्षणम्—

वैरिदर्शनवित्राससम्भ्रमोद्भ्रान्तलोचनः ।
हृदि संक्षोभयोगाच्च रसो ज्ञेयो भयानकः ॥ ( स० सू० ८२।९ )

दुष्टदुर्दर्शनोन्मत्तहिंस्रव्यापकादि यत् ।
तत् स्याद् भयानकरसे प्रयोगे चित्रकर्मणः ॥
( वि० ध० पु० ४३।७)

**बीभत्सरसलक्षणम्—**

समराङ्गणसूत्रधारे बीभत्सलक्षणं लुप्तम्। विष्णुधर्मोत्तरपुराणे बीभत्सलक्षणमित्थमुक्तम्—

श्मशानगर्हिताघातमरणं स्थानदर्शितम्।
यच्चित्रं चित्रवच्छ्रेष्ठं तद्बीभत्सरसोद्भवम्॥
(वि० ध० पु० ४३।८)

**अद्भुतरसलक्षणम्—**

समराङ्गणसूत्रधारेऽद्भुतलक्षणमपूर्णमुपलभ्यते। विष्णुधर्मोत्तरपुराणे त्वद्भुतलक्षणमुपलभ्यते—

यदाविनीतरोमाञ्चचिन्तां(श्चाञ्चित)तार्क्ष्यमुखानतम्।
प्रदर्शयति चान्योन्यं तदद्भुतरसाश्रयम्॥
(वि० ध० पु० ४३।९)

**शान्तरसलक्षणम्—**

अविकारैः प्रसन्नश्च भ्रूनेत्रवदनादिभिः।
अरागाद्विषयेषु यः स शान्तो रसः स्मृतः॥ (स० सू० ८२।१२)

यद्यत्सौम्याकृतिध्यानधारणा स न बन्धनम्।
तपस्विजनभूयिष्ठं तत्तु शान्ते रसे भवेत्॥
(वि० ध० पु० ४३।१०)

**प्रेयोलक्षणम्—**

अर्थलाभसुतोत्पत्तिः प्रियदर्शनहर्षजः।
सञ्जातपुलकोद्भेदो रसः प्रेयः स उच्यते॥ (स० सू० ८२।८)

विष्णुधर्मोत्तरपुराणे तु प्रेयोरसलक्षणं नोपलभ्यते, शिल्पशास्त्रे स्थायिभावोऽपि नवधा प्रोक्तः—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं घृणा।
विस्मयश्च निर्वेदश्च नवधा स्थायिनो मताः॥

समराङ्गणसूत्रधारेऽष्टादशरसदृष्टयश्च प्रतिपादिताः। ताश्च ललिता-हृष्टा-विकासिता-विकृता-भ्रुकुटि-विभ्रम-संज्ञा-संकुचिता-शून्योर्ध्वगता-योगिनी-दीना-हृष्टा-विह्वला-शान्ता-कुञ्चिता-जिह्मा-मध्यस्था-स्थिरा चेत्यष्टादश भवन्ति। विष्णुधर्मोत्तरपुराणे तु षट्त्रिंशद्दृष्टयोऽभिहिताः। तद्यथा—

कान्ता भयानका हास्या करुणा ह्यद्भुता तथा।
रौद्रा वीरा च बीभत्सा शान्ता च रसदृष्टयः॥

स्निग्धा हृष्टा च जिह्वा च क्रुद्धा भीताथ लज्जिता।
तृप्ताथ विस्मिता सौम्या स्थायिभावेषु दृष्टयः॥

मलिनाऽऽकेकरा श्रान्ता चाभितप्तार्थविप्लुता।
विषण्णा शङ्किता चैव त्रस्ता शोका निमीलिता॥

विभ्रान्ता कुञ्चिता शून्या मुकुला तु वितर्किता।
मदिरा ललिता ग्लाना इत्येवं दृष्टिसंग्रहः॥

( वि० ध० पु० २५।१-४ )

एता दृष्टयः शिल्परसविषये ज्ञेयाः।

शिल्पशास्त्रे रसा द्विधा विभक्ताः—सुखात्मको दुःखात्मकश्च। तत्रेष्टविभावाद्युपचितात्मानः शृङ्गारहास्यवीराद्भुतशान्ताश्चेति पञ्च सुखात्मकाः, अनिष्टविभावाद्युपचितात्मानः करुणरौद्रबीभत्सभयानकाश्चेति चत्वारो रसा दुःखात्मकाश्च।

सुखात्मकेषु रसेषु शृङ्गारस्य प्राधान्यमस्ति। शृङ्गारस्य स्थायिभावो रतिः। सा रती रजोगुणसम्भूतानुरागात्परिपुष्टः शृङ्गार उच्यते। रतेरानन्दरूपत्वाच्छृङ्गारो रसः सुखात्मकः। शृङ्गार एव रजोगुणोद्रेकान्मनसो विकासमुपेत्य हासस्थायिभावात्मकं हास्यं रसं जनयतीति शृङ्गाराद्धासो जायते। एवं शृङ्गारमूलत्वाच्छृङ्गारानुगामित्वाच्च हास्योऽपि सुखात्मकः। एवं सा रतिर्यदा रजस्तमसोरुद्रेकाज्जातादुत्साहादुत्साहस्थायिभावात्मको वीररसो जायते। एवं रतेः सुखात्मकत्वाद् रतिमूलो वीरोऽपि सुखात्मकः। वीराद्रजस्तमसोरुद्रेकाद्विचित्रतामुपेत्य विस्मयस्थायिभावात्मकोऽद्भुतो रसो जायत इति वीराददभुतोत्पत्तिः। अद्भुते रसे सामान्यादितरत् किञ्चिद्वस्तु लोकानाश्चर्ये निमज्जयति। एवमाश्चर्यजनकत्वाददभुतोऽपि सुखात्मकः। तत्त्वज्ञानात् शमस्थायिभावात्मकः शान्तो रसो नितान्तसुखात्मको भवति। तत्र वैराग्यात् सुखभूयिष्ठता जायते।

दुःखात्मकेषु रसेषु क्रोधस्थायिभावात्मको रौद्रो रसः। रुद्रोऽस्य देवताऽत एवासौ रौद्ररसोऽभिधीयते। रतिरेव यदा तमोगुणजातात् तैक्ष्ण्यादुग्रत्वमुपेत्य क्रोधस्थायी रौद्रो रसो जायते। उग्रस्वभावत्वादयं दुःखात्मको परिगण्यते। रौद्रादेव तमोगुणोद्रेकाच्छोको विकासमुपेत्य विषादलक्षणः शोकस्थायिभावात्मा करुणो रसः। इष्टविनाशाद् बन्धुवियोगाद् धननाशाच्च शोकोद्भवोऽत एवासौ दुःखात्मकः। अत्र न केवलं दुःखस्यानुभूतिरपि त्वक्ष्णोरश्रुपातोऽपि जायते। जुगुप्सनीयत्वात् सत्त्वतमसोरुद्रेकात् सङ्कोचात् परिपुष्टो जुगुप्सास्थायिभावात्मको बीभत्सो रसः। दुर्गन्धित्वाद्यप्रियवस्तुदर्शाद् रक्षसां

पिशाचादीनाञ्च क्रियाकलापावलोकनात्, श्मशानादिगर्हितस्थानदर्शनाच्च घृणा जायते। घृणाया एवापरं नाम जुगुप्सा। जुगुप्सया च बीभत्सरसस्याभिव्यक्तिर्भवति। एवं घृणायां जनकत्वादयं दुःखात्मकः। भीताभयप्रदानसारत्वाद् भयस्थायिभावात्मको भयानको रसः। बीभत्स एव सत्त्वतमसोरुद्रेकात् प्रतिभयभावमुपेत्य भयानकरसो भवति। गुरुनृपयोरपराधाद् वित्रासाच्छून्यगृहारण्यगमनात् स्वजनवधबन्धविकृतशब्द-दुष्टोन्मत्तहिंस्रव्यापादकादीनां दर्शनाद् वा भयं जायते। भयाद् भयानकरसस्याभि-व्यक्तिर्भवति। भयजनकत्वाद् भयानको दुःखात्मको भवति। जुगुप्सनीयत्वाद् दुर्गन्धि-स्वाद्यनिष्टवस्तुदर्शनाज्जुगुप्सास्थायिभावात्मको बीभत्सः। बीभत्सवस्तुदर्शनाद् रक्षसां दानवादीनां क्रियाकलापस्यावलोकनात् श्मशानादिगर्हितस्थानावलोकनाद् वा घृणा जायते। घृणाया अपरं नाम जुगुप्सा। जुगुप्सया च बीभत्सरसस्याभिव्यक्तिः। एवं शृङ्गारादयो नव शिल्परसा उक्ताः शिल्पशास्त्रे—**"नव चित्ररसाः स्मृताः"**[1] इति।

कैश्चिदाचार्यैर्व्याख्याकारैश्चार्द्रतास्थायिभावात्मकः स्नेहो वात्सल्यं वा, गर्द्ध-स्थायिभावात्मको लौल्यः, भगवद्विषयकरतिस्थायिभावात्मको भक्तिरसः, मिथ्याज्ञान-स्थायिभावात्मको मायारसः, स्नेहस्थायिभावात्मकः प्रेयान्, मतिस्थायिभावात्मक उदात्तः, गर्वस्थायिभावात्मक उदात्तः, हर्षस्थायिभावात्मक आनन्दरसः, स्पृहास्थायि-भावात्मकः कार्पण्यम्, लज्जास्थायिभावात्मको व्रीडनकम्, आसक्तिस्थायिभावात्मको व्यसनम्, अरतिस्थायिभावात्मको दुःखम्, सन्तोषस्थायिभावात्मकः सुखमित्याद्यपरेऽनेके रसाः स्वीकृताः ; किन्त्वेतेषु केचिद् रसा रतावन्तर्भवन्ति, केचिच्च भावेष्वन्तर्भवन्ति। अपरे विद्वांस एषां रसानां पूर्वोक्तेषु नवरसेष्वन्तर्भावमाहुरिति।

कुत्र कस्य रसस्यालेखनं चित्रणं चोचितमित्यपि प्रतिपादितं विष्णुधर्मोत्तरे यच्छृङ्गारहास्यशान्ताश्च रसा गृहेषु लेखनीया[2] इति ; किन्तु गृहेषु युद्धश्मशानादि-कुत्सितानमङ्गल्यांश्चालेख्यान् न लिखेत् कदाचिदपि[3]। एवं देववेश्मनि सर्वे रसा लेखनीयाः; किन्तु नृपवेश्मनि ते रसा नोल्लेखनीया[4] इति।

वस्तुतस्तु सौन्दर्यात्मा रसः। कलाकारस्य सौन्दर्यमयी दृष्टिरेव कला। सौन्दर्य-बोध एव कलाया व्यापको धर्मः। चित्रकलया मूर्त्तिकलया च विशिष्टैः प्रतीकैराकारैश्च रञ्जनप्रभावादपेक्षिता भावाः प्रत्याय्यन्ते। भाव एवाभ्यन्तरस्य सौन्दर्यस्य बोधकः।

---

१. विष्णुधर्मोत्तरपुराणे—४३।१ तथा समराङ्गणसूत्रधारे—८२।२-३।

२. शृङ्गारहास्यशान्ताख्या लेखनीया गृहेषु ते। ( वि० ध० पु० ४३।११)

३. युद्धश्मशानकरुणानृतदुःखार्त्तकुत्सितान्।
अमङ्गल्यांश्च न लिखेत् कदाचिदपि॥ ( तदेव—४३।१४)

४. देववेश्मनि कर्त्तव्या रसाः सर्वे नृपालये।
राजवेश्मनि नो कार्या राज्ञां वासगृहेषु ते॥ ( तदेव—४३।१२ )

मूर्त्तिकलायाश्चित्रकलायाश्चैकमात्रं प्रयोजनमभिव्यक्तिरेवास्ति । सौन्दर्यानुभूतिरेवाभिव्यक्तिरुच्यते । सा सौन्दर्यानुभूतिश्चाखण्डानुभूती रसानुभूतिश्चोच्यते ।

काव्ये कलायां च या रचना मानवहृदयस्य मधुरतरां क्षुधां काममुज्जीवयति परितर्पयति च, सा श्रृङ्गाररसस्य रचनाऽभिधीयते। मोहोञ्जोदडोनामके स्थाने कांस्यमूर्त्तिरेकोपलब्धा, तत्र नग्नावस्थाया नृत्यन्त्येका सुकोमला नार्यङ्किता। सा विविधैरलङ्कारैर्विविधहावभावादिभिश्चालङ्कृता नृत्यभावं प्रदर्शयन्ती श्रृङ्गाररसं द्योतयति। अमरावत्यां नारीप्रतिमासु कामुकताया भावविशेषाः परिदृश्यन्ते। गुप्तकालस्तु लावण्यसौन्दर्ययोः कृते प्रसिद्धो युग आसीत्। तस्मिन् काले मूर्त्तिषु चित्रेषु च विलासस्योत्कृष्टता परिलक्ष्यते। श्रृङ्गाररसेन प्रभावितासु युगलप्रतिभासु देवजङ्घामधितिष्ठन्ती देवी ( नारी ) आलिङ्गनावस्थायां प्रदर्शिता।

मध्ययुगस्य प्रतिमासु श्रृङ्गाररसस्य साम्राज्यमासीत्। उत्कलस्य लिङ्गराजमन्दिरे बाह्यप्राचीरेषु कोणार्कमन्दिरे रथचक्रयोश्च याः कामशास्त्रसम्बद्धा मूर्त्तय आलिखिताः, ताः श्रृङ्गाररसपरिप्लुताः । शिवाशिवयोरालिङ्गनावस्थायामालेखनं श्रृङ्गाररसं प्रकटयति । शिवस्यार्धनारीश्वरप्रतिमायामेकब्रह्मकल्पना प्रदर्शिताऽवलोक्यते । उत्कलप्रदेशोयेषु सर्वेषु मन्दिरेषु श्रृङ्गाररसाभिनिविष्टानां मूर्त्तीनामाधिक्यमवलोक्यते। खजुराहोमन्दिरस्य प्रवेशद्वारे कामशास्त्रसम्बद्धानां मूर्त्तीनां करणं कामस्य श्रृङ्गारस्य प्रभावं व्यञ्जयति। मथुरायां गृहीतस्तना यक्षिणी नग्नावस्थायामालिखिता श्रृङ्गाररसं द्योतयति ।

वीररौद्ररसयोर्भावानां प्रदर्शने कलाकाराः स्वनैपुण्यं प्रादर्शयन्। अन्धकासुरवधकर्त्तुस्त्रिपुरान्तकस्य प्रतिमा शिवस्य वीररसमभिव्यनक्ति। ग्रामीणजनतारक्षाभारं वहन्ती निर्मिता यक्षमूर्त्तिर्वीररसं प्रकटयति । देवोषु महिषासुरमर्दिन्या दुर्गायाः प्रतिमा रौद्ररसस्योद्बोधिका । भैरवमूर्त्तिस्तस्मिन्नेव रौद्ररसोद्बोधकप्रतिमावर्गे परिगणनीया ।

विष्णोर्नरसिंहावतारस्य मूर्त्तिर्भयानकरसमुद्बोधयति। गौतममातुर्मायादेव्या गर्भे हस्तिप्रवेशचित्रणं मानवानाश्चर्ये निमज्जयति। इदं दृश्यमद्भुतरसं व्यनक्ति। सारनाथस्थाने भगवतो बुद्धस्य प्रतिमा शान्तरसेनाऽऽप्लुता वर्तते। उदयगिरिगुहायामुत्कीर्णाऽनन्तशायिविष्णुप्रतिमाऽपि शान्तरसमभिव्यनक्ति। संसाराद् विरताऽऽध्यात्मिकतायां च लीना ध्यानमुद्रायामवस्थिता बुद्धमूर्त्तिः शान्तरसस्योत्तमं निदर्शनमस्ति। सारनाथस्थाने भगवतो बुद्धस्य प्रतिमा करुणरसाश्रिता वर्तते, यत्र करुणरसस्य प्रवाहोऽवलोक्यते ।

गुप्तकालः कलायाः क्षेत्रे स्वर्णयुगेनोपमीयते। तस्मिन् काले विविधरससंयुक्ताः कलाकृतयो निर्मिता अभूवन्। अस्मिन् युगे बाह्यस्य सौन्दर्यस्यावहेलनं प्रारभत। मांसलं

शरीरं रङ्गलेपादिकम्, आभूषणादिकं च बाह्यं सौन्दर्यं प्रकटयति ; परं गुप्तकलाकृतिषु तावदाध्यात्मिकताऽऽन्तरिकं सौन्दर्यं च प्रमुखे स्तः। आभूषणानामल्पादल्पतरः प्रयोगो बौद्धकृतिषु लभ्यते।

अजन्तागुहायां वाघगुहायाममरावत्यां चानेकविधानि नारीचित्राणि लिखितानि सन्ति, यानि शृङ्गाररसानामुद्बोधकानि सन्ति। तत्रोल्लिखितान्याश्चर्यजनकानि चित्राण्यद्भुतरसं जनयन्ति।

एवं रसोन्मेषस्येयं परिपाटी प्राचीनमूर्त्तिचित्रकलासूपलभ्यते। एवं चित्रकलाया मूर्त्तिकलायाश्च मुख्यं प्रयोजनं रसानुभूतिरासीत्। रसानुभूतिश्च सौन्दर्यमूलानुभवस्यापरं नाम। सौन्दर्यमूलेयमनुभूतिः स्वयमेव साध्याऽऽसीत्। कलाक्रियादिसाधनैः सा सौन्दर्यमूला चेतनाऽऽत्मानं प्रत्यक्षाकारकलावस्तुरूपेण प्रकटयति। यत्र सौन्दर्यमूलानुभूतिर्भवति, साऽनुभूतिरुदातानुभूतो रसानुभूतिश्चोच्यते। अत्र न कस्यचिद्विमतिः। आनन्दवर्धनाभिनवगुप्तरवीन्द्रनाथप्रभृतिभिरपि स्वीकृतोऽयं पक्षः।

भट्टनायकमतानुसारेण कलाकारो हि योगीव ध्यानावस्थितः कष्टोद्विग्नतादिव्यतिरिक्तां शुद्धामात्मनिष्ठां सात्त्विकीं स्थितिं प्राप्नोति[1]। विश्वनाथोऽपि भट्टनायकविचारमनुसरन् कथयति—'सत्त्वोद्रेकात् सहृदयैरेवाऽऽस्वाद्यते रसः'[2]। स चास्वादो ब्रह्मानन्दसहोदरः प्रकाशात्मा सहृदयसंवेद्योऽलौकिकश्चमत्कारः। अभिनवगुप्तानुसारेण कलाक्रियादिसम्बद्धा सौन्दर्यमूला कलानुभूतिः स्वयमेव पर्याप्ता[3]। सा सौन्दर्यमूलाऽनुभूतिः नामरूपात्मके जगति परमानन्दरूपेणाभिव्यज्यते। सा चानन्दरूपाभिव्यक्तिरेव रसः। स एव सहृदयैरनुभूयमानो रसास्वादः।

एवं च शिल्पशास्त्रे विष्णुधर्मोत्तरपुराणे समराङ्गणसूत्रधारे च शिल्पविशारदैः शिल्परसानां चर्चा कृता। सहृदयचित्तं रसस्य स्थायिनो भावस्य सञ्चारिभावस्य च भूमिमवगम्य विभावानुभावयोरस्तित्वं यदाऽन्तःकरणमान्दोलयति, तदा हृदयवासनारूपास्ते मनःस्थिता भावा रसतामाप्नुवन्ति। एवं च कलायां भावानुभूतिरेव रसः। रस एव कलाया आत्मा। रसश्चानुभूतेरेव विषयः। अनुभूतिरियं न केनापि सञ्चार्यते, न वर्ण्यते। असञ्चरणीयाऽवर्णनीयाऽलौकिकी चेयमनुभूतिः। कलाकारद्वारा निर्मितया कलया दर्शकचेतनायामियमनुभूतिर्जागर्ति। मानवहृदये केचन भावाः स्थायिरूपेणान्तर्हिता भवन्ति। कलाया अवलोकनेन तेषां मनस्यनुभवरूपेणान्तर्हितानुभूतिर्जागरिता भवति। इयमेवानुभूती रसः। स च सहृदयैरास्वाद्यते, निर्वैयक्तिकानन्दश्चानुभूयत इति।

●

१. सहृदयदर्पणः (भट्टनायककृतः)।
२. साहित्यदर्पणः (विश्वनाथकृतः)।
३. अभिनवभारती (अभिनवगुप्तकृता)।

लघु-ग्रन्थमाला

[ ५१ ]

श्रीवामनदत्तविरचितः

# संवित्प्रकाशः

सम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

निदेशकः, अनुसन्धानसंस्थानस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वि० सं० २०५०

# प्रास्ताविकम्

संवित्प्रकाशाख्योऽयं ग्रन्थः काश्मीरिकेण विपश्चिदपश्चिमेन वामनदत्तेन प्राणायि। तेनैतस्मिन् ग्रन्थे सर्वत्र विष्णुरभ्युगतः परमतत्त्वरूपतया। एवं सत्यपि वामनदत्तः सादरं स्मर्यते काश्मीरशैवदर्शनलब्धवर्णैः। प्रत्यभिज्ञादर्शनसूरिणा श्रीमदभिनवगुप्तपादेन स्वकीये 'तन्त्रालोक'-नामके ग्रन्थे ( ५,१५५ ) संवित्प्रकाशस्थितश्लोकोद्धरणावसरे तदुक्तिं गुरुभाषिततयाऽङ्गीकृतवता सप्रश्रयं सभाजितो वामनदत्तः। गुरुभाषितशब्दं व्याख्याति तट्टीकाकारो जयरथः—'गुरुभिः = वामनदत्ताचार्येण भाषितमिति संवित्प्रकाशे'।

तन्त्रालोकीये श्लोकान्तरे यत्राभिनवगुप्तपादेन स्वगुरूणां प्रशंसा समुदीर्यते, तत्र तन्मध्ये वामनकाभिधः कश्चिदभिष्टूयते कृतो। पूर्वोद्धरणपरामर्शेन संवित्प्रकाशविभावयिता वामनदत्त एवासौ भवेदिति पार्यते निश्चेतुं यथायथम्। एवं तावदेतस्य जीवनकालो नूनं श्रीमदभिनवगुप्तपादेभ्यः प्राक्तनो दशम्यामाहोस्विदेकादश्यां ख्रीस्तशताब्द्यां मन्तव्यः

संवित्प्रकाशस्याद्वयवादे काश्मीरशैवाद्वयशासनस्य स्पष्टं विलोक्यते प्रभावः। आदिशेषकृताधारकारिकाद्वैतवादस्य संवित्प्रकाशाद्वैतवादेन सार्धं विहिते तौल्ये वामनदत्तीयाद्वयवादस्यासाधारणानि लक्षणानि प्रकटीभवन्ति। आदिशेषस्याद्वयवादस्तावदद्वैतवेदान्तानुगुण्यादितो व्यपवृक्तः। यद्यप्यादिशेषमतानुसारेण परतत्त्वं मायेश्वरो विष्णुरूरीक्रियते, तथाप्यसावद्वैतवेदान्तवादीव जगतो मिथ्यात्वमुद्घोषयति। यद्यपि वामनदत्तोऽपि विष्णोः परत्वमामनति, तथापि तन्मतानुसारेण जगतो मिथ्यात्वं नास्ति। एवं सत्यपि तदीयमस्तित्वं वेदकस्यायत्तं तिष्ठति, वेदकेन विना वेद्यस्यासम्भाव्यात्।

वस्तुतस्तु सर्वत्र सदैव वेद्यवेदकैकत्वं चकास्ति। संविदस्तु बहिर्मुखत्वहेतुत्वाद् विकल्पनाशक्तिप्रभावेण वेद्यवेदकभेदः परिलक्ष्यते। विष्ण्वनुग्रहेण यदा कश्चन योगी स्वसंवित्तिं वेदकं प्रत्यन्तर्मुखीं विधाय 'अहं वेदकः' इत्यहंकृतिं परिहरति, तदा विष्णोः शुद्धः संवित्प्रकाशो वेद्यवेदकभेदविनिर्मुक्तो निश्शेषवस्तुषु विश्वरूपेण स्वत आविर्भवति। अतो मिथ्यात्वमबिभ्रतो जगतो विष्णुत्वेनावस्थानं प्रतिपद्यते। एवमपि नानात्वं नास्तीत्यस्माद्धेतोर्विवर्तवादः परिणामवादश्चेति पक्षद्वयं शक्यमभ्युपगन्तुम्। तदुक्तं वामनदत्तेन ( १, १०४; १०६ )—

अतिनिर्मलबोधैकरूपे देहपरिग्रहः ।
विवर्तपरिणामाभ्यां द्वाभ्यामप्युपपद्यते ॥
विवर्तेऽप्यतथारूपस्तथा भासित्वमच्युत ।
परिणामे स एव त्वं सुवर्णमिव कुण्डले ॥ इति ।

विष्णुश्चित्प्रकाशस्वभावः सर्वेषां वस्तूनां प्रकाशको मतः । तदुक्तं श्वेताश्वतरोपनिषदि (६,१४)—

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति ॥ इति ।

विष्णोः प्रकाश्यरूपेणापि विद्यमानत्वादसौ केवलं प्रकाशक एव नास्ति । तदुक्तं संवित्प्रकाशे (१,११)—

तदात्मकत्वं भावानां विवदन्ते न केचन ।
यत्प्रकाश्यदशां यातो नाप्रकाशः प्रकाशते ॥ इति ।

यथा काश्मीरीयाद्वयशैवदर्शनवादिनः शिवस्य प्रकाशात्मकत्वमुद्घोषयन्ति, तथैव वामनदत्तोऽपि प्रतिपादयति विष्णोः स्वरूपम् । तस्माद् वामनदत्तस्य सिद्धान्तः काश्मीरिकशैवदर्शननीकाशो विभाति, न त्वद्वैतवेदान्तसन्निभः । प्रकारान्तरेणापि तदीयस्य सिद्धान्तस्य काश्मीरिकशैवसिद्धान्तसादृश्यमुपपद्यते । तथाहि—विष्णुः स्वातन्त्र्यशक्तिमान् सर्वत्र विश्वस्वरूपतया विजृम्भत इति वादः । यद्यपि पाञ्चरात्रसंहितास्वपि विराजते वाद एषः, तथापि वामनदत्तीयः सिद्धान्तोऽद्वयवादिशैवमतेन सममेव सादृश्यं बिभर्ति ।

वामनदत्तमतानुसारेण विष्णोश्चतुर्व्यूहात्मकस्य प्रमातृमेयमानरूपता वर्तते । अनेन चतुष्कात्मकरूपेण संवित्स्वरूपः परमार्थः सर्वत्र प्रकटो विलसति । अयं वादः खलु काश्मीरशैवदर्शनस्य समाम्नायते । एवमेव महानयसिद्धान्त उररीकृतो वामनदत्तेन । तस्मादसौ महानयस्य परमदेवतां कालकर्षिणीं स्तौति संवित्प्रकाश (४, १२–१३)—

एका सा विविधावस्था चराचरतया स्थिता ।
द्विषट्कपत्त्रं सा पक्षं कालमाधारमाश्रिता ॥
व्यज्यते कलनात् तस्याः कालः कालत्वमागतः ।
सोत्पादक्षयरूपेण भावानां कालकर्षिणी ॥ इति ।

यद्यपि वामनदत्तमतस्य काश्मीरीयशैवमतेन साधं नानाविधं सादृश्यमवलोक्यते, तथापि तस्य दर्शने पूर्णाहन्ताभाववादो न विद्यते। अनया दृशा वामनदत्तस्य वादे पाञ्चरात्राद्वयवादविकासस्य जायमानमेकावस्थानं लक्ष्मीतन्त्रानुशीलनाद् विज्ञायते। भूयांसः श्लोकाः संवित्प्रकाशादुद्धृताः सन्ति लक्ष्मीतन्त्रीये चतुर्दशाध्याये। एतेन संवित्प्रकाशाल्लक्ष्मीतन्त्रस्यार्वाचीनत्वं सिध्यति। यद्यपि वामनदत्तेन नाङ्गीकृतः पूर्णाहन्ताभाववादः, तथापि लक्ष्मीतन्त्रेऽसौ सर्वत्र प्रतिष्ठितः। यथोक्तं तत्रैव लक्ष्मीतन्त्रे ( २, १२–१३ )—

**सर्वावस्थागता देवी स्वात्मभूतानपायिनी।**
**अहन्ता ब्रह्मणस्तस्य साहमस्मि सनातनी॥**
**आत्मा स सर्वभूतानामहंभूतो हरिः स्मृतः।**
**अहन्ता सर्वभूतानामहमस्मि सनातनी॥** इति।

अन्यच्चापि ( २,१६ ) तत्रैव—

**लक्ष्मीनारायणाख्यातमतो ब्रह्म सनातनम्।**
**अहन्तया समाक्रान्तो ह्यहमर्थः प्रसिध्यति॥** इति।

श्रीमद्भगवद्गीतादर्शनं संवित्प्रकाशस्य तावदुपजीव्यभूतं विलसति। अत्र 'नासतो विद्यते भाव इत्याद्यादेशतः प्रभो' ( १,१११ ) इत्यत्र, भूमिरापोऽनलो वायुः खं मनो धीरहंकृतिः' ( ६।५ ) इत्यत्र च तत्रत्यांश्चरणान् स्पष्टतः समुदलेखीद् वामनदत्तः। परवर्तिनि तन्त्रालोकेऽपीयमेव सरणिरङ्गीकृता लक्ष्यते। सप्तमे प्रकरणे 'यज्ञानां जपयज्ञोऽस्मीत्येतद् गीतासु यच्छ्रुतम्' इत्यत्र तु वामनदत्तेन गीताग्रन्थो नाम्नैव व्याहृतः।

शैवदर्शनस्य कश्चित् प्रभावो यथा केषुचन वैष्णवशास्त्रेषु विलोक्यते तथैव वैष्णवमतस्यापि प्रभावः केषुचित् काश्मीरिकेषु शैवशास्त्रेष्वपि स्पष्टं लक्ष्यते। निरीक्ष्यतां पद्यमिदं भास्कराचार्यविरचितस्य कक्ष्यास्तोत्रस्य—

**ज्ञानं प्रशान्तं तव बोधवृत्तिरैश्वर्यमुद्यत्प्रसरा परेषाम्।**
**प्रकाशनं प्रत्यपि योग्यरूपा भक्तिर्बहिः स्थैर्यवती बलं सा॥**
**उत्पन्नबाह्यप्रसरा तु वीर्यं तेजश्च बाह्यानवभासयन्ती।**
**षोढेत्थमेकैव तव स्वशक्तिर्बाह्याविमर्शात् तु भवेदविद्या॥**

भास्कराचार्यो यद्यपि वैष्णवमतानुसारी वर्तते, तथाप्यत्रासौ विष्णोः शक्तिवच्छिवस्य शक्तिमपि विवृणोति ज्ञानशक्त्यैश्वर्यबलवीर्यतेजोरूपतया। भगवदुत्पलाचार्यप्रणीतायां स्पन्दप्रदीपिकायां तु वैष्णवमतप्रभावस्य विशेषतो दर्शनं जायते। तत्र

स्थाने स्थाने समुद्ध्रियन्ते संवित्प्रकाशस्य श्लोकाः। यद्यपि भगवानुत्पलाचार्यो वामनदत्तवत् काश्मीरिको ब्राह्मण आसीत्, तथापि स वैष्णववामनदत्तवैसादृश्येन शिवमिष्टदेवतया समाराधयामास! एवं सत्यपि पाञ्चरात्रसंहितानां प्रामाण्यमसौ शैवागमवदेवाङ्गीकुरुते स्म। यथा स्पन्दकारिकासु पूर्णाहन्ताभावो नास्ति, तथैव संवित्प्रकाशमतानुरोधेन तावदहन्ताभावविहीनं परमतत्त्वमुद्घोष्यते।

अस्या वामनदत्तकृतेरियमाविष्क्रिया शैववैष्णवाद्वयवादसंबन्धविषयकं किमपि गवेषणान्तरं नूनं प्रेरयेदिति विभाव्यते। विशेषतो बुधवरैरहिर्बुध्न्यसंहिता लक्ष्मीतन्त्रं च मृगणीये। तान्त्रिकवाङ्मयवदिहापि च्छन्दोभाषादिनियमोल्लङ्घनानि सन्ति भूयांसि।

इदम्प्रथमतया ग्रन्थस्यास्य प्रकाशनसौभाग्यभाग् भवति सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः। प्रकाश्यमानादस्मात् संस्करणात् प्राग् वामनदत्तकृतेरस्याः केचिदेव श्लोकाः समैक्षिषत काश्मीराद्वयशैवशास्त्रेषूद्धृता लब्धवर्णैः। विशेषतस्तु ते समुद्धृताः सन्ति भगवदुत्पलविभावितायां स्पन्दप्रदीपिकायाम्। यद्यपि तत्र तत्र समुद्धृतैस्तैः श्लोकैर्वामनदत्तीयसिद्धान्तवैशिष्ट्यं साकल्येन विज्ञातुं न प्राभवन् सुधियो जिज्ञासुजनाश्च, तथापि संवित्प्रकाशग्रन्थस्य गुरुत्वं तेषामविदितं नातिष्ठत्। एवं तावदसाधारणं महिमानमाबिभ्रतोऽस्य सम्पादनं चिरात् प्रतीक्षितमासीदेव।

तस्यास्य हस्तलेखप्रेप्सया विविधग्रन्थालयसूचीपत्रविलोकनप्रसङ्गे काशीहिन्दूविश्वविद्यालयीयपुस्तकालयस्थग्रन्थसूच्यां संवित्प्रकाशस्य मातृकायाः (सी:४००२ संख्याकायाः) दर्शनेन नितरां प्रासीदत् स्वान्तनिशान्तमास्माकम्। इह संस्करणे तस्याः संज्ञा 'B' इति विद्यते। ततः परं ग्नोलीमहोदयद्वारा यस्या अन्यस्या मातृकायाः प्रतिकृतिरासादिता, सा काश्मीरिके श्रीनगरस्थे पुस्तकालये विराजते १९७१ संख्याका। तस्याः संकेत इह 'A' इति संज्ञया विहितोऽस्ति।

ग्रन्थस्यास्यानुसन्धाने प्रतिलिपीकरणे सम्पादने च साहायकं समर्पयन्तं नेपालीयतन्त्रग्रन्थसम्पादनयोजनायां मत्सहायकं मदन्तेवासिनं डॉ० मार्कडिच्कोव्स्किमहोदयमाशीराशिभिः सभाजयामि। संवित्प्रकाशस्यास्य प्रकाशनेन विद्वज्जनाः प्रीणयेयुर्जिज्ञासुजनाश्च नूनमुपकृता भवेयुरिति ध्रुवं प्रत्येति

सुखरात्रौ २०५० वि०<br>वाराणस्याम्

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

# विषयसूची





वामनदत्तप्रणीतः

# संवित्प्रकाशः

## अथ प्रथमं प्रकरणम्

[1]वेद्यवेदकरूपेण बहिरन्तर्व्यवस्थया ।
भेदप्रधानसंकल्पो विभेदयति तत् तथा ।। १ ।

न तदन्तर्न तद् बाह्यो न वेद्ये वेदके न च ।
नान्तरे[2] न च मध्येऽपि सर्वथापि तदन्यथा ।। २ ।

यद् विकल्पैरनाक्रान्तं यच्छब्दैरकदर्थितम् ।
यदुपाधिभिरम्लानं नौमि तद् वैष्णवं पदम् ।। ३ ।

दूरापास्तविकल्पेन [3]न चेद् [4]मायानुभूयते ।
मध्यमां वृत्तिमास्थाय स संवित्प्रसरोऽमलः ।। ४ ।

सर्वः स्वरूपं जानाति परो ज्ञेयो न कस्यचित् ।
रूपं स्वं सर्वगं च त्वं त्वयेदं पूरितं जगत् ।। ५ ।

प्रकाशकानां स्वे रूपे प्रकाश्यत्वं न दुर्लभम् ।
यदनिर्भक्तरूपास्ते स्वरूपस्य प्रकाशकाः ।। ६ ।

केवलं वाक्यभावोऽयं यदभिन्नमपि स्वयम् ।
विभेदयति [5]तद् वस्तुष्वेति कर्तव्यतावशात् ।। ७ ।

---

१. ॐ श्रीकृष्णाय नमो नमः श्रीपरमात्मने नमः ॐ श्रीगुरवे नमः । ॐ शिवो जयति । २. AB : नान्तरा ।
३. AB : 'न' नास्ति । ४. AB : मायो । ५. AB : सा ।

यथा राहोः शिर इति शब्दे भेदो न वास्तवः ।
तथा स्वात्मनि वेद्यत्वभेदशब्दो[१] न वास्तवः[२] ।। ८ ।

यथा [३]चक्षुः स्थितं रूपं बाह्यं स्वं रूपमीक्षते ।
तथा ज्ञानस्थिता संविद् ज्ञेयं स्वं रूपमीक्षते ।। ९ ।

यथाग्निना समाविष्टं सर्वं तद् रूपमीक्ष्यते[४] ।
तथा ज्ञानसमाविष्टं सर्वं तद्रूपमीक्ष्यताम्[५] ।। १० ।

[६]प्रमातृपक्षाभावेषु नह्यवस्थावकल्पते ।
यतस्ततः प्रकाशस्ते[७] स्वयमेव तदात्मना ।। ११ ।

त्वदात्मकत्वं भावानां विवदन्ते[८] न केचन ।
यत्प्रकाश्यदशां [९]यातो नाप्रकाशः प्रकाशते ।। १२ ।

अपरोक्षे भवत्तत्त्वे सर्वतः प्रकटे स्थिते ।
यैरुपायाः प्रतन्यन्ते नूनं त्वां न विदन्ति ते ।। १३ ।

देशकालक्रियाकारैरवच्छिन्नेषु वस्तुषु ।
अनवस्थितरूपस्त्वं भासि भास्यबहिःस्थितः ।। १४ ।

त्वया सर्वमिदं व्याप्तं त्वयि सर्वमिदं स्थितम्[१०] ।
भावकश्च त्वमेवास्य सर्वस्य जगतः प्रभो ।। १५ ।

सर्वेश्वरत्वे सर्वज्ञे सर्वत्वे यैस्तव प्रभो[११] ।
प्रमाणमुच्यते नूनं भवन्तं ते न जानते ।। १६ ।

मातृत्वं यत्र मानत्वाद् व्यतिरिक्तं न किञ्चन ।
मेयत्वाद् वा जगन्नाथ तत्र कस्येदृशी कथा ।। १७ ।

---

१. A : श्चाब्दं ।
२. B : इयं पङ्क्तिर्नास्ति ।
३. A : चसः B : चाक्षः ।
४. AB : मीक्षताम् ।
५. AB : इयं पङ्क्तिर्नास्ति ।
६. AB : पेक्षा ।
७. A : प्रकाशन्तां B : प्रकाशान्तां ।
८. AB : विवदन्ति ।
९. B : याता ।
१०. AB : स्थितिः ।
११. B : इयं पङ्क्तिर्नास्ति ।

कालान्तस्थ[1] महाभूत[2] यथेष्टविनियोजक[3] ।
सर्गेण देहदृष्टस्त्वं यदा सर्वेश्वरस्तदा ॥ १८ ।

सर्वज्ञश्चेतनः संस्त्वं यतः कारणतां गतः ।
सर्वस्याव्यतिरेकेण स्वरूपेणापरिच्युतः ॥ १९ ।

सर्वज्ञः सर्वदैव त्वं सर्वस्य हृदये न चेत् ।
केनान्यथास्य सम्भाव्या नष्टार्थविषया स्मृतिः ॥ २० ।

मनस्संक्षिप्य विषयात् त्वय्यासीनो जितेन्द्रियः ।
यद् यद् विधित्सति तथा तत् तज्जानात्यसंशयम् ॥ २१ ।

ज्ञेयं ज्ञानाद् बहिर्भूतं [4]स्वप्नेऽपि [5]हि न दृश्यते ।
अतस्त्वदात्मकं विश्वं ज्ञानरूपो यतो भवान् ॥ २२ ।

ततः शुद्धचिदात्मत्वाद् विश्वरूपस्त्वमुच्यते ।
परिनिष्ठितरूपं[6] हि कथं रूपान्तरं श्रयेत् ॥ २३ ।

वेद्यं स्वरूपतां नीत्वा यदा जानाति वेदनम् ।
तदानीं वेद्यता का स्यात् का वा वेदनता[7] परा ॥ २४ ।

वेद्यवेदकरूपाभ्यां यच्छून्यं भावकं च यत् ।
तदेव वासुदेव त्वं[8] ततः संवित्समुद्भवः ॥ २५ ।

त्वद्ध्यानामृत[9]निःष्यन्दनिःशेषक्षालिने[10] नमः ।
सदसद्वासनाक्षीणे[11] आनन्दात्मनि दृश्यते[12] ॥ २६ ।

निर्मलानन्दबोधैकरूपस्त्वं भव्यबुद्धिभिः ।
वेद्याद् वा वेदकाद् वापि लभ्यसेऽवहितात्मभिः ॥ २७ ।

---

१. AB : कालाष्टम । २. A : महादभूतं । ३. AB : विनियोजकः ।
४. B : स्वपे । ५. A : हि । ६. BA : परिनिष्टतरूपं ।
७. AB : वेदकता । ८. A : त्वां B. त्व । ९. AB : सृत ।
१०. AB : क्षालितै । ११. AB : क्षये । १२. AB : पश्यन्ति ।

तवाचित्रैकरूपस्य वेद्यवेदकतामयी ।
नाथ मिथ्यैव मन्यन्ते सत्यचिन्मात्ररूपिणः ।। २८ ।

न शान्तमुदितं नापि तव रूपं न मध्यमम् ।
रूपं रूपं तव हरे यन्न केनचिदुच्यते[1] ।। २९ ।

यदैव विदितं विश्वं तदानीमेव चिन्मयम् ।
यन्नास्ति भागो वेद्योऽसौ नाथ यो वेदकाद् बहिः ।।३० ।

संवित् त्वदात्मा चेत् सत्यं तदिदं त्वन्मयं जगत् ।
वेद्यो वेदकतामाप्तो वेदकः संविदात्मताम् ।। ३१ ।

विकल्पमूलतादोषाद् भिन्नैः शब्दैर्न तत्कथा ।
चिदभिन्नोऽपि यच्छब्दः कथं तेनापि तत्कथा ।। ३२ ।

सर्वातीतमतः केन तव [2]रूपं निरूप्यते ।
निरूपणा भवेद् भिन्ने भिन्नश्चात्मा न कस्यचित् ।। ३३ ।

स च त्वमेव सर्वात्मा[3] ततोऽपि न निरूप्यसे ।।
केवलं निस्तरङ्गेण स्वरूपेण परात्मना[4] ।
परित्यक्तविभागेन ज्ञायसे न विकल्पसे ।। ३४ ।

विकल्पातीतरूपत्वात् प्रत्यक्षोऽप्यसि विस्मृतः ।
पुरः स्थितो यथा भावश्चेतसो[5]ऽन्याभिलाषिणः ।। ३५ ।

अविच्छिन्नापि[6] रविभा भावैस्तेभ्यः पृथग् यथा ।
तथा प्रकाश्य सर्वार्थांस्त्वं तेभ्योऽप्यतिरिच्यसे ।। ३६ ।

सृजन् विदन् ज्ञापयंश्च त्रिधैकस्त्वं प्रकाशकः ।
व्यतिरिक्तः प्रकाशेभ्यो न यथाऽन्ये प्रकाशकाः[7]।। ३७ ।

---

१. B : के नदिुच्यते । २. AB : रूप । ३. AB : त्मम् ।
४. AB : परात्मनो । ५. AB : श्चेतनात्या, ।
६. AB : अविछिन्नापि । ७. AB : इयं पङ्क्तिर्नास्ति ।

न प्रकाशाः प्रकाशन्ते त्वत्प्रकाशोदयं विना ।
प्रकाशाख्यस्त्वमेकोऽतः सर्वेऽन्ये तमसा समाः ॥ ३८ ।

अखण्डास्ते[1] न भासन्ते विवेको [2]नावतिष्ठते ।
सर्वे समं समाभान्ति[3] चिद्भानावुदिते त्वयि ॥ ३९ ।

अन्धानामप्यनन्धत्वं[4] मूलानामनपायिवाक् ।
अवचिन्वन्ति [5]मार्गं तं समः सर्वस्य वेदते ॥ ४० ।

सदैव शुद्धोऽनुभवोऽयं प्रत्याकारकर्बुरः ।
आकारान्तरसंचारकाले तस्यापि निर्मलः ॥ ४१ ।

यथा जात्या सितं वस्त्रं रक्तं रागेण केनचित् ।
[6]तत्पदप्राप्तशुक्लत्वं पुना रागान्तरं[7] श्रयेत् ॥ ४२ ।

अयमुच्चारयन् वाक्यं वर्णाद् वर्णं कथं व्रजेत् ।
यावन्मध्ये न विश्रान्तस्त्वयि शुद्धचिदात्मनि ॥ ४३ ।

एवं शुद्धा चितिर्जात्या[8] यदाकारोपरागिणी ।
तत्त्यागापरसंचारमध्ये शुद्धैव तिष्ठति ॥ ४४ ।

दक्षिणेतरसंचारनिरोधाद् मध्यमाश्रितः ।
अग्नीषोमेश्वरो भावः प्रकाशयति ते पदम् ॥ ४५ ।

धिया देहमनालम्ब्य विषयं चादिशन्नपि[9] ।
यदन्तरा[10] वेदयते तद् रूपं तव निर्मलम् ॥ ४६ ।

निवृत्तविषयेच्छेन त्वद्भक्त्युल्लसितात्मना ।
आस्वाद्यते योऽनुभवः सोऽभ्यासादपवर्गदः[11] ॥ ४७ ।

---

१. AB : अखण्डः रवे । २. AB : यो । ३. AB : समाभाति ।
४. AB : रूचं । ५. AB : यंगं । ६. AB : न तद प्राप्य ।
७. AB : पुनरागान्तरं । ८. AB : चिर्निवृत्त्या । ९. AB : नास्ति ।
१०. A : यदन्तराद, B : नास्ति । ११. B: नास्ति ।

उपरागेऽपि शुद्धत्वं न त्यक्तमनया प्रभो ।
परित्यज्य निजं रूपं संविदाख्या कुतः श्रयेत् ॥ ४८ ।
अथाप्राप्यैव तद् रूपं भवेद् रूपान्तरानुगा ।
तद्रूपा हि च दृश्येत कारणस्यापि संभवात् ॥ ४९ ।
मुखं विना यथादर्शे पृथग् बिम्बो[1] न मन्यते ।
तथा समुद्धृतं ज्ञेयं[2] ज्ञातं न द्वैतपण्डितः[3] ॥ ५० ।
भावैर्विभाव्यतां तेजस्यार्के वेत्ति यथा जडः ।
वेद्यवेदकरूपाभ्यां तथा त्वय्यपि मन्यते[4] ॥ ५१ ।
समुदेति यथा भावान् विना भानुर्नभस्तले ।
वेद्यं विनैव भगवन् भवान् केन हृतोदयः ॥ ५२ ।
अत्यन्ताच्छस्वभावत्वात् स्फटिकस्य यथा स्वकम् ।
रूपं परोपरक्तस्य नित्यमेवोपलभ्यते ॥ ५३ ।
तथा भावसमायुक्तं भगवंस्तावकं[5] वपुः ।
अत्यन्तनिर्मलतया पृथक् तैर्नोपलभ्यते ॥ ५४ ।
नैतावताऽसौ[6] स्फटिकः पृथङ्नास्त्येव रञ्जकात् ।
भावरूपपरित्यक्ता तव वा निर्मला तनुः ॥ ५५ ।
यथोद्धृतविशेषस्य सामान्यस्य निजा[7] स्थितिः ।
पृथङ्न शक्या निर्देष्टुं न च तत्रास्ति तावता ॥ ५६ ।
यथोद्धृतकुण्डलादेः[8] कनकस्य स्वयं स्थितिः ।
[9]एवं नित्या निजा शुद्धा सुखदुःखनिषेधनात्[10] ।
स्वसंवेदनसंवेद्या तव संविन्मयी स्थितिः ॥ ५७ ।

---

१. AB. वालो । २. B : ते यँ । ३. AB : ज्ञातान् द्वैत्यपंडितः ।
४. B : मन्यत । ५. B : तावकः । ६. AB : एतावता ।
७. AB : निज । ८. A : कुण्डलादि । ९. B : एनं ।
१०. AB : निषेधनात् ।

अविशेषं निर्विभागपदं सङ्कटवर्जितम्[1] ।
स्वज्योतिश्चिद्घनैकान्तं नौमि ब्रह्म सदोदितम् ॥ ५८ ।

निर्विशेषो विशेषेषु नाभविष्यद् भवान् यदि[2] ।
विशेषावगतिर्न स्यात् सर्वस्य स्वात्मनि स्थितेः ॥ ५९ ।

त्वयि नाथ न भेदोऽस्ति कारणे यत् कुतो भिदा ।
कार्येऽस्मिंस्त्वं पद्मनाभ निर्विशेषं ततो जगत् ॥ ६० ।

त्वत्कारणे[3]त्वं सर्वस्मिन्नपि ज्ञातं तदन्वयात्[4] ।
संवित्समन्विते विश्वे नासंवित् कारणं[5] भवेत् ॥ ६१ ।

सर्वाधारे सर्वमये सर्वतश्चातिरेकिणि ।
त्वय्यन्ते वा कोऽन्यदेशः[6]कालो वा निष्क्रियात्मनि ॥६२।

यथा न कालः कालस्य देशो देशस्य वा परः ।
तथा तवापि सर्वात्मन् व्यतिरिक्तौ न तौ[7] क्वचित् ॥६३।

यत् स्वरूपान्न च्यवते सत् परैर्नोपधीयते ।
यदन्यैरपरिच्छेद्यं तन्नित्यं त्वां[8] विदुर्बुधाः[9] ॥ ६४ ।

परिच्छेद्यपरिच्छिन्नैस्त्वत्तः कालादिसंभवः ।
अप्रमेयस्वरूपस्य तव कालादयो न वै[10] ॥ ६५ ।

तवाप्रकम्प्यरूपस्य[11] युगपत् सर्वसंस्थितिः ।
ज्ञेया [12]क्रमस्वरूपेण यौगपद्याविरोधिना ॥ ६६ ।

क्रमाभावे यौगपद्यं[13] तदभावेऽप्यसौ पुनः ।
तयोर्विरोधभावे स्यान्नेतरेतरसंभवः ॥ ६७ ।

---

१. A : मदशंकल, B: xxल. २. B : विशेषXX ते नं स्यxxx स्वात्मान्तस्थितेः ।
३. AB : कारण । ४. B : तदवन्दयात् । ५. B : कारणो ।
६. B : कोण्डदेशः । ७. B : नन्यो । ८. B : नास्ति ।
९. B: नास्ति । १०. AB : के । ११. B : रूपंयत् ।
१२. AB : कम । १३. AB : योगपक्ष ।

एवं हि स्वापरापेक्षं[1] यतः समवभाससे ।
स्वप्रकाशमनोरूपं तव तत्त्वविदो विदुः ॥ ६८ ।

यो न वह्निर्न वा सोमो न भानुः प्रथते न च ।
ज्योतींष्यतीत्य सर्वाणि स्वज्योतिस्तन्नमाम्यहम् ॥ ६९ ।

काप्यवस्था[2] न[3] ते[4] सास्ति यस्यां संविन्न वर्तते ।
तेन चिद्घनमेव त्वां योगिनः पर्युपासते ॥ ७० ।

इत्येव ज्ञातदेशादेरक्रियाजगदुद्भवः[5] ।
त्वत्तो विवृत्या मन्तव्यो न स्वरूपान्यथास्थितेः ॥ ७१ ।

वज्ररत्नोपमो येन परिणामेन वा पुनः ।
कदाचिदपि संभाव्यो न त्वान्यस्य विनोद्भवः ॥ ७२ ।

अवाताकाशसंकाशान्निस्पन्दोदधितुल्यतः[6] ।
त्वत्तो [7]ज्ञानघनान्नाथ जगत् सर्वं[8] प्रवर्तते ॥ ७३ ।

[9]योऽस्पन्दपूर्वः[10] सस्पन्दः स्वतो नो[11] व्यतिरिच्यते ।
नातिरिक्ते व्याप्रियते त्वत्तो नास्ति यतः परः ॥ ७४ ।

अन्यत्प्रवर्तमानस्य[12] यद्यपि स्यात् प्रयोजनम् ।
संवित्पर्यवसानत्वात् तस्यापि न पृथक् स्थितिः ॥ ७५ ।

संविन्मूलाद् वर्णपर्णाज्ज्ञानस्तम्भात् सरस्वती ।
प्रागघोषा सनादानु पुण्यतीर्था प्रवर्तते ॥ ७६ ।

त्वत्प्रवृत्ता प्राणयति शक्तिः सा विश्वमोजसा ।
प्रतियान्ती पुनस्त्वां सा संकोचयति संभवम् ॥ ७७ ।

---

१. B : -पेक्ष । २. B : नास्ति । ३ B : नास्ति ।
४. B: नास्ति । ५. B : देशदेः क्रिया । ६. B : तल्यतः ।
७. ज्ञानवतान् । ८. AB : सर्वे । ९. AB : यत् ।
१०. AB : सस्पन्दं । ११. A : स्वतनो, B : नास्ति ।
१२. B : अन्यं ।

कार्यानुरूपं सा रूपं तथा नामापि बिभ्रती ।
निर्वाहयति विश्वस्मिंश्चित्रां यात्रां चराचरम् ॥ ७८ ।

सा वैखरी मन्त्रवर्णा निहन्ति[1] तमसः स्थितिम् ।
मनःसमाश्रया हन्ति[2] मध्यमा राजसीमपि ॥ ७९ ।

निहन्त्यविद्यां पश्यन्ती तदूर्ध्वं[3] प्राणगोचरा ।
त्वदात्मभूता सा शान्ता समं सर्वप्रकाशिका ॥ ८० ।

स्वस्मिन् साध्ये साधनेषु स्वातन्त्र्यं येन संस्थितम् ।
तेनात्यक्तत्वदाकारा सर्वत्रैषा विजृम्भते ॥ ८१ ।

महाविभूतेरमलात् समात् सूक्ष्मान्निरञ्जनात् ।
भेदेनालक्ष्यवपुषस्त्वत्तः[4] परमकारणात् ॥ ८२ ।

निर्वासनं सदानन्दं शुद्धं सर्वात्मकेवलम् ।
व्यज्यते[5] प्रथमं ज्ञानं यत् [6]तवैश्वर्यसंभवात् ॥ ८३ ।

[7]हेत्वन्तरानपेक्ष्यं[8] यत् स्वातन्त्र्यं विश्वनिर्मितौ ।
तदैश्वर्यं जगद्वेद्यं त्वदृते कस्य संभवेत् ॥ ८४ ।

निपीतचित्तरूपायाः सर्वत्र समसंस्थितेः ।
अव्याहतायाः कार्येषु त्वत्तः शक्तेः समुद्भवः ॥ ८५ ।

ज्ञानान्नान्यत् तवैश्वर्यं भक्तिर्नान्या तथेरिता[9] ।
त्वय्येताः कथिता नाथ ध्यायिविश्रामभूमयः ॥ ८६ ।

वस्तुपूर्वं[10] ततो भावः पश्चादर्थस्ततः क्रिया ।
तथा[11] यदीप्सिततमं तव तत् कर्मसंज्ञितम् ॥ ८७ ।

---

१. AB : निहन्ती । २. A : -हन्ती । ३. B : तदूर्ध्वे ।
४. B: वपुं । ५. B : व्यञ्ज्यते । ६. AB : यदत्वै ।
७. B : हे त्वं तद । ८. AB : पेक्ष्यं । ९. A : तथेरा तु ।
B : नास्ति । १०. B : पूर्वं । ११. A : तया ।

क्रियान्तं सर्वभावेषु चातूरूप्यमिदं यतः ।
चतुरात्मा[1] त्वमेकोऽतः सर्वमावृत्य तिष्ठसि ॥ ८८ ।
शान्तरूपाथ पश्यन्ती मध्यमा वैखरी तथा ।
चतूरूपा चतूरूपं वक्ति वक्ता हि[2] वाग्वपुः[3] ॥ ८९ ।
यथानया जगद् विद्धं सर्वमेव निजात्मना ।
तथा त्वयानुविद्धेयं सर्वतो भाति भारती ॥ ९० ।
सर्वसाधारणं रूपं[4] यतो वाचां प्रवर्तते ।
अभ्येति यत्र च पुनस्तत् ते विष्णोः[5] परं पदम् ॥ ९१ ।
भवन्निष्ठौ यदा देव विश्वस्मिन् प्रभवाप्ययौ ।
व्यवहारेषु सर्वेषु तथा तन्मध्यवर्तिषु ॥ ९२ ।
शरीरजो वा शाब्दो वा मानसो[6] वा समुद्गतः[7] ।
व्यवहारोऽप्यसौ नास्ति यत्र त्वं नाथ नाग्रगः ॥ ९३ ।
त्वामुक्त्वा तत्परं ब्रूमः[8] सद्गतौ[9] व्यावहारिकम् ।
यश्चेन्द्रियाणि मनसा परित्यक्तानि मन्यते ॥ ९४ ।
तच्च[10] वातैः परित्यक्तं तत् सर्वं सर्वविद् भवान् ।
पर्यवस्यति सर्वं च त्वय्येवानन्तरूपिणि ॥ ९५ ।
संविन्निष्ठतया[11] सर्वव्यवहारव्यवस्थिते ।
पृथ्व्यादिकालपर्यन्ताः क्रमात् सूक्ष्मा महत्तराः ॥ ९६ ।
परेषां व्यापकाः पूर्वे निर्मलाश्चानुवेधिनः ।
अलक्ष्यतत्त्वा व्याप्येषु तद्गुणोद्धरणं विना ॥ ९७ ।

---

१. B : चत्वर । २. AB : नास्ति । ३. AB : वर्क वपुः ।
४. B : साधारणे रूपे । ५. B : विस्योः । ६. B : मनसो ।
७. B : समुद्भूतः । ८. AB : ब्रूतः । ९. B : संहातौ ।
१०. AB : तश्च । ११. B : संविन्नष्टतया ।

यथोत्तरं लोकयात्रामधिकां संप्रतन्वते ।
त्वदधिष्ठिततत्त्वानां[1] येनैषामेव सा[2] स्थितिः ॥ ९८ ।

येनासि सूक्ष्मः सूक्ष्मेभ्यो महद्भ्यश्च महत्तरः ।
तथेदं विहितं विश्वं त्वया नाथ भवन्मयम् ॥ ९९ ।

विना[3] रज्जुं न सर्पाभा यथा साध्यतमात्मिका ।
कर्मेदं त्वत्कृतं चापि[4] त्वन्मयं येन माधव ॥ १०० ।

विलीनाहंकृति [5]ततस्त्वमेव परिशिष्यसे ।
एतावतैव भेदोऽस्य यदहंमानितात्मनि ॥ १०१ ।

सा चेद् विलीना त्वद्भक्त्या नष्टो[6]भेदः स्थितैकता ।
अविद्येयमियं माया मिथ्याज्ञानमिदं तु तत् ॥ १०२ ।

यदचित्रैकरूपे त्वय्यद्वये द्वयदर्शनम् ।
मायात्वमेतदेवास्य[7] यन्नाशस्तत्त्वदर्शनात् ॥ १०३ ।

यदविज्ञातदेहस्य शुद्धधीर्मन्यते पुनः ।
अतिनिर्मलबोधैकरूपे देहपरिग्रहः ॥ १०४ ।

विवर्तपरिणामाभ्यां द्वाभ्यामप्युपपद्यते ।
विवर्ते[8]ऽप्यतथारूपस्तथा भासि त्वमच्युत ॥ १०५ ।

परिणामे स एव त्वं सुवर्णमिव कुण्डले ।
विवर्तात् परिणामस्य भेदस्त्वयि न विद्यते ॥ १०६ ।

न्यूनातिरिक्तान्यथात्वदोषैर्यन्नाभिभूयसे ।
विदुः सब्रह्मका लोका भूताधारं भवद्वपुः ॥ १०७ ।

---

१. B : त्वदधिष्टित २. B : ना।स्ति- । ३. B : रजुं ।
४. A : -क्रुतमपि B : -कृतमस्ति । ५. AB : वतस् ।
६. A : नष्ट B : नास्ति ७. B : ।द ।
८. A : विवृक्ताव B : विवत्तो व ।

[1]अन्तर्भूतं बहिर्भूतं देवा अपि न तद् विदुः ।
सृष्टौ स्थितौ च संहारे कस्य चाध्यक्षशेषताम् ॥ १०८ ।

महाविभूत्यभिन्नस्य वासुदेवस्य ते विदुः ।
यथा हेम्नो रूपकेषु वैचित्र्यं स्वापरिच्युतम् ॥ १०९ ।

अपरित्यक्तरूपस्य तथा ते विश्वरूपता ।
यथा गलितरूपस्य हेम्नः पिण्डात्मना स्थितिः ॥ ११० ।

तथा गलितवेद्यस्य तव शुद्धचिदात्मता[३] ।
नासतो विद्यते भाव इत्याद्यादेशतः प्रभो ॥ १११ ।

यत् किञ्चिद् दृश्यते लोके[४] तत् सत् पूर्वं त्वदात्मकम्[५] ।
क्रिया त्वदात्मिका विष्णो[६] कार्यं नाथ त्वदात्मकम् ॥११२।

कारणं च त्वमेवात्र किं तदस्ति न यद् भवान् ।
आकृतेरपि सद्भावो न ते नाथ विरुध्यते ॥ ११३ ।

केवलं भौतिकी मा भूत् संविन्मय्यस्ति का क्षतिः ।
अनुल्लिखितरूपस्य[७] ज्ञानं बहिरसंभवात् ॥ ११४ ।

सर्वस्यापि हि भावस्य तत् तु केन निरुध्यताम् ।
भौतिकी वाऽस्तु भगवन् सापि नित्योपपद्यते ॥११५ ।

त्वयि सत्कारणे नित्ये सापि नित्या यतः स्थिता ।
परिणामभवा भावा निवर्तन्ते न केचन ॥ ११६ ।

इति त्वमेव सर्वस्मिन् जगत्येकोऽवशिष्यसे ।
परितः सर्वरूपाय समन्तात् संविदात्मने ॥ ११७ ।

---

१. A : यत्तु B : यन्न्त । २. AB : भूत । ३. B : -चित- ।
४. B : लोको । ५ B : न्यता । ६. B : विस्नो ।
७. A : अनुल्लिखितरूपस्य, B : अनुलिखिरूपस्य ।

सर्वतः स्वप्रकाशाय तुभ्यं सद्ब्रह्मणे नमः ।
नन्वहं[1] न पृथक् त्वत्तो न[2] तु त्वमसि मत्पृथक् ॥ ११८ ।

आवयोर्नमनं नान्यत् फलभेदे कथैव का[3] ।
इत्थं ज्ञानक्रियैक्यं स्यात् तदैक्ये का क्रियाक्षतिः ॥ ११९ ।

क्रियाक्षतिर्न चेन्नाथ त्वां नौम्येष सहस्रशः ।
बलादयो[4] हि करणाः सर्वस्मिन्नेव कर्मणि ॥ १२० ।

ते च त्वय्येव नियताः कोऽहं केन करोमि किम् ।
त्वयि संन्यस्तकर्माहं करोमि न करोमि च ॥ १२१ ।

[5]परां निर्वृतिमायामि त्वय्यर्पितविधिक्रियः ।
श्वेतं सहस्रशिरसं महाभोगं[6] वहज्जगत् ॥ १२२ ।

तथानन्तवपुर्नौमि पर्यङ्कं शुद्धसंविदः ।
महाभूतदलं पद्मं यस्य [7]नाभेः समुत्थितम् ॥ १२३ ।

भूम्यादिकालपर्यन्तं पद्मनाभं नमामि तम् ।
अन्तर्गृहीतसर्वार्थं भावयन्नादसूक्ष्मकम्[8] ॥ १२४ ।

जगत् सिसृक्षतः पूर्वं नौमि ते स्वसुखं वपुः ।
तदनन्तचिदाधारं बिभ्रन् मन्त्रमयीं च गाम् ॥ १२५ ।

नौमि यज्ञवराहस्य रूपं[9] ज्ञानक्रियात्मकम् ।
वेद्यवेदकरूपेण ज्ञानमेव द्वयात्मकम् ॥ १२६ ।

दर्शयन्तं नरहरे नौमि तेजोमयं वपुः ।
नौमि त्वां वामन सौक्ष्म्याज्जगद्व्याप्त्या[10]
त्रिविक्रमम् ॥ १२७ ।

---

१. AB: नन्ताहं ।  २. A: न तु व्यस्तं न ।  ३. B: त का कथा ।
४. B: बल्यादयो ।  ५. B: परो ।  ६. A: महाभागं ।
७. AB : नाभेः ।  ८. B : सूक्ष्मकः ।  ९. B : रूप ।
१०. B : व्याप्या ।

वायुवाहनरूपेण सक्रियत्वात् खगासनम् ।
[1]ब्रह्माण्डशतसंकाशं नौमि ते व्यक्तरूपिणः ॥ १२८ ।
निःशेषकल्मषप्लोषपावकं[2] तावकं वपुः ।
अनेकसुखदोषोत्थसंतापशमनोद्यतम् ॥ १२९ ।
नौमि त्वां चेतसो राममारामं पुण्यसंपदाम् ।
नमः सर्वविदे तुभ्यं सर्वेश्वर नमोऽस्तु ते ॥ १३० ।
सर्वात्मक नमस्तेऽस्तु सर्वातीत नमोऽस्तु ते ।
यद् भूमिर्विकल्पानां शब्दानां यन्न गोचरम् ॥ १३१ ।
यदलक्ष्यं स्वोपाधीनां[3] नौमि तद् ब्रह्म शाश्वतम् ।
नमामि त्वां[4] च[5] संस्तौमि स्तुतेर्वाचा[6]यतो विधिः ॥१३२।
वाचामतीते भवति किं स्तोत्रैः श्रेयसी गतिः ।
तस्याङ्गभूता[7] या वाचः कतिचिन्मत्समीरिताः ॥१३३।
त्वत्प्रसादनहेतुं मे प्रश्नं तादृशमेव ताः ।
मया वामनदत्तेन त्वया संवित् प्रकाशिता ॥ १३४ ।
यं यं तया प्रसीद त्वं सर्वस्य स्वात्मनि प्रभो ।
रात्रदत्तिर्देवदत्तो रत्नादेव्यां यमात्मजम् ॥ १३५ ।
लेभे वामनदत्ताख्यं तत्स्तुत्या प्रीयते हरिः ।
षष्ट्युत्तरं श्लोकशतमिदं बोधं विनापि यः ॥ १३६ ।
पठेन्मधुरिपोरग्रे[8] भक्त्या मोक्षं[9] स गच्छति ।
एकायने प्रसूतस्य कश्मीरेषु द्विजात्मनः ॥ १३७ ।
कृतिर्वामनदत्तस्य सेयं भगवदाश्रया ।

॥ इति संवित्प्रकाशो नाम प्रथमं प्रकरणम् ॥

---

१. AB : कृषाण्ड- । २. B : स्नोष - । ३. AB : स्वपाधीनां ।
४. AB : त्वान् । ५. AB : नास्ति । ६. AB : वाचा ।
७. B : तत्परो । ८. A : घुरिणो B : सफरिपो ।
९. B : मोव ।

# अथ द्वितीयं प्रकरणम्

ॐ अप्रमेयस्वरूपाय शुद्धानन्तचिदात्मने ।
स्वसंवित्त्येकसिद्धाय नमस्ते परमात्मने ॥ १ ।

अबहिः साधनाधीनं नित्यं सुखमभीप्सतः[1] ।
तथा दुःखजिहासूंश्च प्रतीदमभिधीयते[2] ॥ २ ।

नात्मनः पर आनन्दो दुःखं नानात्मनः परम् ।
अनात्मनः परित्यागादात्मनः प्राप्तिरिष्यते ॥ ३ ।

अनात्मन्यात्मनो भावादात्मनिष्ठा समाप्यते ।
स्वतस्तथैव यत् सिद्धं किं तत्रान्यैः प्रमान्तरैः ॥ ४ ।

आत्मा न मेयः कस्यापि तदन्यन्नोपपद्यते ।
मेयभेदात्मनो भेदस्तस्याभावे स किंकृतः ॥ ५ ।

आत्मा यदि भवेन्मेयस्तस्य माता भवेत् परः ।
परान्यात्मा[4] तदानीं स्यात् स परो यस्तु मीयते ॥ ६ ।

विषयोक्तिर्न भावादिपदैस्तुल्यार्थवस्तुषु ।
प्रमातृपारतन्त्र्येण सा प्रसिद्धिमयी यतः ॥ ७ ।

स्वीकारो विषयीकारः स [5]तत्रोद्धोष्यते बुधैः ।
यदन्यत्र प्रसिद्धं तत् संविदः किमपोह्यते[6] ॥ ८ ।

संविदा स्वीकृतं यच्च न [7]तद् विषयसंज्ञितम् ।
तत् स्वीकृतं तदात्मैव विषयोक्तिः क्व तिष्ठताम्[8] ॥ ९ ।

---

१. B : -भीत्सताः । २. B : -जिहारं अप्रतीदम- ३. B : कि ।
४. A : पर आत्मा B : परन्यात्या । ५. B : तन्नो- । ६. A : -पोघ्यते ।
७. B : पश्चात् । ८. B : स्फुतिष्टताम् ।

यत् सत्तामनुबध्नाति स्वसत्तास्थितये जगत् ।
मानं तदात्मनि ज्ञानं स्वभावात्[1] स्वादतृप्तिमत् ।। १० ।

आत्मन्यविदितं न स्यादस्य बाह्यप्रमोद्भवः ।
[2]यदेतस्यार्थतामूलं यद्बोध्यश्च[3] यदत्र च ।। ११ ।

वेद्यं तद् वेदकं शास्त्रं[4] तद् बोध्यार्थितावशात् ।
जडावबोधो बोधस्य बुधैर्बोद्धुं न पार्यते ।। १२ ।

[5]भावाभावौ[6] विषयौ[7] तौ विरुद्धौ चिज्जडौ मतौ[8] ।
इतरेतरबोधेन तयोरन्यतरस्थितिः ।। १३ ।

कल्प्यते न तु संबन्धः स्वभावेन विरुद्धयोः ।
संबन्धोऽपि भवेज्जात्या ताभ्यामर्थवदात्मकः ।। १४ ।

तदात्मकत्वे ता एव तज्ज्ञातृत्वे पृथक् स्थितिः[9] ।
[10]संबन्धिव्यतिरेकेण[11] सम्बन्धे तैरदर्शिते ।। १५ ।

भवेन्मुग्धो जनो[12] दूतैर्विप्रलब्धो [13]वृथोक्तिभिः ।
संबन्धः सिद्धयोर्नास्ति नैराकाङ्क्ष्येण[14]वृत्तितः ।। १६ ।

नासिद्धयोरसत्त्वेन तेनासौ स्यान्न[15] वस्तुतः ।
भावनालक्षणं[16] पृष्टैः [17]सिद्धैर्न भावनादृते ।। १७ ।

शक्यते भावनं वक्तुः[18] परापेक्षाप्रवेशतः ।
यदभिन्नं स्वसंवित्तौ तत्परस्य यदोच्यते ।। १८ ।

---

१. B : स्वभावत्वाद २. AB : यद् तस्य- । ३. AB : यदबाध्यं ।
४. B : शास्तं । ५. B : स्वव- । ६. AB : -भावा ।
७. A : विषय, B : विदय । ८. B : मनौ ९. B : पृथकियतिः ।
१०. B : संबधिष्यति । ११. AB : रेकेन । १२. A : पूर्त्तैर् ।
१३. B : भवेत् मुग्धो जनो दूर्तै विप्रलब्धो इति नास्ति ।
१४. B : नैराकांक्ष्येन । १५. B : स्वान्त । १६. B : लतणं ।
१७. B : शिष्टै । १८. BA : वक्त ।

तदा भिन्नमिवाभाति [1]शाब्दीं भूमिमुपागतम् ।
निराकाङ्क्षा न चैकस्य कष्टादर्थे मतिर्भवेत् ।। १९ ।

अविचित्रे विचित्रे[2] वा वैचित्र्यमभिमन्यते ।
निरस्तकर्तृभावे तु[3] कारणत्वाद्यसम्भवः ।। २० ।

मेयत्वं हि परिच्छेदः स च[4] ज्ञाने न विद्यते ।
न च भावः स्वतः[5] स्वस्य स्वः कदाचिन्न गोचरः ।।२१ ।

सर्वदैव परस्यायं भवेद् मिथ्याभिमानतः ।
अतद्रूपस्य ताद्रूप्यग्रहावेशवशोदयः ।। २२ ।

न तदस्त्यात्मनो रूपं यत् परेणावगम्यते[6] ।
कथमेतन्न जानीमश्चिन्तयन्तोऽपि यत्नतः ।। २३ ।

भावानां भवनं रूपं न मातृत्वं न मानता ।
[7]सेयं विनिर्मिता केन[8] मातृमानव्यवस्थितिः ।। २४ ।

अतिरिक्तं हि सत्ता नो[9] यद् रूपमवधार्यते ।
भावनात्[10] तदिदं मिथ्या न भावानवगाहते ।। २५ ।

मातृत्वमेयताहानौ यत् तयोरवतिष्ठते[11] ।
[12]पृथक्स्थयोर्ग्रहे[13] रूपं तत्सत्यमितरन्मृषा ।। २६ ।

यद् यत् सत्तातिरेकेण भावेषु विनिवेश्यते ।
न तत् तद् रूढिमभ्येति व्युप्तं[14] बीजमिवोषरे ।। २७ ।

कारकग्रामविलये क्रियारूपं परित्यजेत् ।
क्रियावियोगाद् भावानां सत्तैवैकावशिष्यते ।। २८ ।

---

१. AB : शाब्दी । २. B : अविचिन्ने विचिन्ने । ३. AB : भावेषु । ४. B : सर्वं । ५. AB : भावयतः । ६. B : -रवमन्यते । ७. B : सेवं । ८. B : के च । ९. A : सत्तातो । १०. भावनाम् । ११. B : -वतिष्टते । १२ B : पृथक् यथा । १३. AB : गृहे । १४. B : सुप्तं ।

मत्तः परोऽयमेतस्मादन्योऽहमिति यापि धीः ।
नेयमैक्यविरोधेन स्थातुं[1] क्षणमपि क्षमा ॥ २९ ।

[2]परव्यवस्थापि परे यावन्नात्मीकृतः[3] परः ।
तावन्न शक्यते कर्तुं यतो बुद्धः परः परः ॥ ३० ।

[4]बुद्धश्च बोधभेदेन भवेन्न व्यवहारभाक् ।
व्यतिरिक्तस्य बुद्धत्वे सर्वं बुद्धं न किं भवेत् ॥ ३१ ।

स्वसत्तामात्रसन्तुष्टैर्निरपेक्षैः स्वभावतः ।
[5]भावैः किमपराद्धं वो येन मेयत्वमापिताः ॥ ३२ ।

यथेन्द्रियैर्विना भूतं विषयैरप्यनाविलम् ।
स्वतः प्रकाशते ज्ञानं विषयो नैवमिष्यते ॥ ३३ ।

तत्राङ्गविषयज्ञप्त्यैर्यत्[6] प्रमाणत्रयं पृथक् ।
पृथग् विषयसंयोगान्न तदभ्येति वेदनम् ॥ ३४ ।

साक्षात् समक्षधीरर्थात् सम्बन्धादनुमानधीः ।
ते [7]मूलमागमस्याहुरिति नान्यप्रमोद्भवः ॥ ३५ ।

त्रयाणामपि मानानां प्रतिभाप्राणतेष्यते ।
सम्यङ् मिथ्यात्वनिर्णीतेरन्यथानुपपत्तितः ॥ ३६ ।

स्ववित्तिरेव प्रतिभा कर्तव्येषु क्रमात्मिका ।
निर्मला कथिता तज्ज्ञैर्यया जीवन्ति जन्तवः ॥ ३७ ।

सर्वज्ञतायाः सा बीजमैश्वर्यं तदधिष्ठितेः[8] ।
जायते केवलं नैति समस्तात्मसु[9] गोचरम् ॥ ३८ ।

---

१. B : स्याते । २. B : -व्यवस्या । ३. B : -त्मनी ।
४. B : बुद्धा । ५. B : साधैः । ६. B : -ज्ञप्यै ।
७. AB : -ङ्ग- । ८. B : -घिष्टते । ९. A : सामहात्मसु, B : सामस्तात्मसु ।

स्वसंवेदनसारेण[1] यदि सर्वस्य मानता ।
तत् किं मानान्तरैः[2] कार्यं [3]मेयोत्तरनिराकृतैः ॥ ३९ ।

अज्ञेन ज्ञानसारूप्यं [4]माने तद् विफलं मतम् ।
वैकल्पिकेन भेदेन[5] वस्तुतस्त्वेकमेव तत् ॥ ४० ।

देशैकरूपा[6] तैर्ज्ञेया संविदर्थप्रकाशता ।
न हि ज्ञानादपोद्धृत्य दृष्टोऽर्थः केनचित् क्वचित् ॥४१ ।

ज्ञानेऽप्यन्तः प्रविष्टस्य[7] भावस्य यदि [8]बाह्यतः ।
ज्ञानादेव तदा बाह्यं स्वमिदानीं किमुच्यताम् ॥ ४२ ।

अर्थाप्रविष्टं विज्ञानं सत्तास्य ज्ञायते कुतः ।
ज्ञानस्यैवाधिकारोऽस्ति सदसन्मार्गणे यतः ॥ ४३ ।

यथार्थो न मया [9]नीतो शुद्धोऽपि न मया तथा ।
इति बोध्यं स्वसंवित्तौ ज्ञानतार्थस्य दुर्घटा ॥ ४४ ।

येन येन विभिद्यन्ते हेतुना भावनिम्नगाः[10] ।
तेन तेनैक्यमायान्ति[11] [12]बोधोदधिसमागताः ॥ ४५ ।

अभावो व्यवहार्येण यथा भेदेन कल्पितः ।
भावोऽपि व्यवहार्येण तथा भेदेन कल्पितः ॥ ४६ ।

यदि भावो विरूद्ध्येत भावेनान्येन केनचित् ।
स्वभावेऽपि विरोधोऽस्य भावत्वात् केन वारितः ॥ ४७ ।

[13]विकल्पशून्यज्ञानस्य सत्तैव [14]संविदुच्यते ।
न तु भेदेन कल्पिन्या धिया यद्वद् घटादिकम् ॥ ४८ ।

---

१. AB :-सारैवं  २ AB : मानातेरैः ।  ३. AB : मेयोतर- ।
४. B : मानं ।  ५ B : भेदं न ।  ६. A : -रूपस्तै B : रूप्यन्ते ।
७. B : प्रविक्ष्यस्य ।  ८. AB : अ ।  ९. AB : नीली ।
१०. B : निम्नगः ।  ११. B : -रुयान्ति ।  १२. B :-नेदधि ।
१३. A : -शून्यस्य ।  १४. AB : स्वविदु- ।

यतो न वित्तिभेदेन तस्यान्येन निरूप्यता ।
ज्ञानोत्तरनिरूप्यत्वे ज्ञानस्य ज्ञानताक्षतेः ॥ ४९ ।

अविकल्पिकया[1] वृत्त्या सर्वात्मत्वेन भूयते ।
अवच्छेदः कल्पनातस्तदभावादनन्तता ॥ ५० ।

मेयं नाम न वस्त्वस्ति मात्रपेक्षा हि मेयता ।
[2]मातर्यपि न मातृत्वं सत्यं मेयव्यपेक्षणात् ॥ ५१ ।

अनपेक्षा सतां सिद्धेरसिद्धेरपि नासताम् ।
निरपेक्षेषु भावेषु न मातृत्वं न मेयता ॥ ५२ ।

सत्ताया[3] न विशेषोऽस्ति सापि स्वयमनेकता ।
निर्मूलैवाहृता[4] कस्मादिति माया न बुद्ध्यते ॥ ५३ ।

प्रकाशते संविदेका तदन्यत् तु[5] प्रकाश्यते ।
प्रकाश्ये च भवेत् कर्म तच्च कर्त्रा विना कथम् ॥ ५४ ।

कर्तृत्वं च न सत्तायाः कथञ्चिदतिरिच्यते ।
सत्तैव यदि कर्तृत्वं [6]तदनुक्तमसंवृतम् ॥ ५५ ।

असत्त्वादेव नो सत्त्वमसतां परिकल्प्यते ।
[7]विचित्रत्वं तु सत्ताया न विनान्यानुवेदनम् ॥ ५६ ।

सत्तायास्तु भवेदन्यद् यदसत्तां[8] विचिन्तयेत् ।
कथं सत्ता सतो हेतोर्वैचित्र्यं नास्ति तां प्रति ॥ ५७ ।

वस्तुस्थित्या न बन्धोऽस्ति [9]तदभावान्न मुक्तता ।
विकल्पघटितावेतावुभावपि न किञ्चन ॥ ५८ ।

---

१. A : अविकल्पकया । २. B : मतर्यपि ।
३. B : सत्ता यो तु । ४. A : -हृता ।
५. B : तदत्यन्ता । ६. B : -तूक्तम- ।
७. B : विचिन्नत्वं । ८. AB : सत्ता ।
९. A : तदा- ।

मेयमानप्रमातृत्वैर्मितौ यत् पर्यवस्यते ।
चतुष्पथा बोधनका [1]चतुरात्म्योक्तिभाजनम् ॥ ५९ ।

इमां वामनदत्तेन विहितामात्मसंस्तुतिम् ।
अधिगम्य[2] विमुच्यन्ते जन्तवो भवविप्लवात् ॥ ६० ।

एकायने प्रसूतस्य कश्मीरेषु द्विजात्मनः ।
कृतिर्वामनदत्तस्य सेयमात्मप्रकाशिनी ॥ ६१ ।

॥ [3]इत्यात्मसंस्तुतिर्नाम द्वितीयं प्रकरणम् ॥

---

१. ॰श्चातुरान्योक्त॰ । २. B : अपि तस्य । ३. A : आत्मसप्तति

## अथ तृतीयं प्रकरणम्

यस्य मायापरिस्पन्दविहिता विश्वसंस्थितिः ।
अस्मद्विकल्पसंङ्कल्पसंहर्ता[1] तमहं नतः[2] ॥ १ ॥

[3]सर्वो विकल्पः संसार इत्युक्तेरयमाशयः ।
यदसत्त्वं सृतेः[4] सत्त्वं शुद्धायाः संविदः स्थितम् ॥ २ ॥

विकल्पशब्दो लोकार्थप्रसिद्ध्या[5] न हि सार्थकः ।
किन्तु शास्त्रप्रसिद्ध्यैव सा चास्मिन्न प्रतिष्ठिता[6] ॥ ३ ॥

सत्सु शब्देषु चार्थेषु संवृतो वाथ वास्तवः ।
सम्बन्धस्तेषु सम्भाव्यो विकल्पार्थो बहिः क्व सत् ॥ ४ ॥

अर्थवन्तः सर्वशब्दा विकल्पार्थेन यन्मतम् ।
औपचारिकया वापि सत्तया तन्मतद्वये ॥ ५ ॥

भवेदेतद्विकल्पार्थो यदि कश्चित् स्थितो भवेत् ।
यावदेतत् तदर्थस्य नाद्याप्यस्ति प्रतिष्ठितिः[7] ॥ ६ ॥

न चोपचारसत्तापि विकल्पार्थात् परा मता ।
पृथक्त्वं वास्तवत्वं स्यादुपचारेऽस्तमायाति[8] ॥ ७ ॥

विकल्पशब्दस्यान्ये किं शब्दाः पर्यायतां गताः ।
स वा तेषां यदेतस्य तेषां चैकार्थतोच्यते ॥ ८ ॥

विकल्पशब्दो नाप्यर्थस्तेषां ते न तदर्थता ।
उच्यते सर्वशब्दानां यदि लोकोऽनुमन्यते ॥ ९ ॥

---

१. B : -विकल्पसे । २. B : नतः ' ३. A : सर्वे ।
४ A : -सत्त्वमृतेः । ५. B : -प्रसिद्धा । ६. B : प्रतिष्टिता ।
७. B : प्रतिष्ठितः । ८. AB : -ायति ।

विकल्पशब्दत्वं वाच्यं यदि किञ्चित् प्रकल्पयेत् ।
इतरेऽपि तदर्थं न नार्थवन्तः कथं किल ॥ १० ।

विकल्पार्थश्च शब्दार्थं इत्युक्तिः पर्यवस्यति ।
निरर्थकत्वे शब्दानां विकल्पार्थो यतो मतः[1] ॥ ११ ।

स्थित्युत्पत्ती विना शब्दौ यदा मोहविमोहिताः ।
पतन्ति [2]प्रतिपत्तारः सविकल्पो विविच्यते[3] ॥ १२ ।

विवेच्यते विकल्पोऽपि विकल्पेन तदात्मना ।
विचाररहितं येन निर्विकल्पं स्ववेदनम् ॥ १३ ।

विचार्यते विकल्पस्य व्यापारस्थितिरुद्भवः ।
स्वरूपं वेत्ति[4] नैतेभ्यो यद् विचारपदं परम् ॥ १४ ।

तत्र स्वरूपं शब्दो वाप्यर्थो वा ज्ञानमेव वा ।
शब्दार्थयोर्विकल्पत्वे न [5]तावल्लोकसम्मतम् ॥ १५ ।

शिष्यते केवलं ज्ञानं न तत्रापि विकल्पता[6] ।
सर्वत्रास्ति विशेष्यत्वं विकल्पेन चितो यतः ॥ १६ ।

सम्भवे व्यभिचारे च विशेषणपदा चितिः ।
विशेषणपदस्यार्थे प्रसिद्ध्याङ्गीकृते सति[7] ॥ १७ ।

यावद् विकल्पशब्दस्य कश्चिदर्थो न साधितः[8] ।
तावद् विशेषणं[9] नायं शब्दमात्रो निरर्थकः ॥ १८ ।

उद्भवश्चिन्त्यते तस्य यस्य व्यापारसंस्थितिः[10] ।
ज्ञायते तदभावे तु[11] कस्य कस्मात् समुद्भवः ॥ १९ ।

---

१. AB : नमन् । २. B : प्रतिपन्नातः । ३. विरिच्यते ।
४. A : चेति । ५. B : -नाव । ६. B : विकल्पना ।
७. B : मुनि । ८. B : मापितः । ९. B. विशेषणे ।
१०. AB : संस्थिती । ११. B : -भावेन ।

स्थितिरव्यापृतस्यापि न कस्याप्युपलभ्यते[1] ।
व्यापारेण पदार्थानां [2]यत्स्वरूपावधारणम् ॥ २० ।

अर्थक्रियासमर्थत्वाल्लक्षणत्वाद्धि वस्तुनः ।
यदनर्थक्रियाकारि न तत् सदिति युज्यते ॥ २१ ।

व्यापारविरहादेव[3] न [4]पुष्पादेरसत्प्रथा[5] ।
व्यापारश्च विकल्पस्य न स्वात्मनि परेऽपि वा ॥ २२ ।

नाभिमानगृहीतोऽपि विकल्पस्तेन नैव सत्[6] ।
परस्य तेनासंस्पर्शो यथावद् वस्तुनस्ततः[7] ॥ २३ ।

व्यापारः स्वात्मनि न च[8] सिद्धेः स्वात्मनि तेन[9] किम् ।
[10]नहि सिद्धेषु भावेषु व्यापारः फलवान् भवेत् ॥ २४ ।

अभिमानगृहीतं तु भवेत् सम्भावनास्पदम् ।
विकल्पादभिमानस्य मतिभेदे प्रसाधिते ॥ २५ ।

यस्त्वैक्ये[11] नाम भेदोऽयमेतयोर्न स्वरूपतः ।
गृहीतोक्तिरतो व्यर्था[12]स्वात्मैवास्तु[13]तथाविधः ॥ २६ ।

तस्माद् विकल्पः[14] संशुद्धाद् विज्ञानान्नातिरिच्यते ।
तेनैव निर्विकल्पोऽयं विकल्पः स्वात्मनि स्थितः ॥ २७ ।

अगृहीते गृहीतोक्तिर्निश्चितोक्तिरनिश्चिते ।
क्रियते मन्दमतिभिर्विकल्पस्य विकल्पकैः ॥ २८ ।

पूर्वापरं न मन्यन्ते नापि शब्दस्य कारणम् ।
विकल्पः केवलं ज्ञानं न च ज्ञानं विशिष्यते ॥ २९ ।

---

१. B : -प्युलभ्यते । २. B : यतव- । ३. -विरहारे र्वान ।
४. AB : पुष्पादे । ५. B : सम्यथा ।
६. B : -न नैव सत् इति नास्ति । ७. A : गते-; B-गत ।
८. B : न च इति नास्ति । ९. B : नास्ति । १०. B : नास्ति ।
११. B : यद्वैक्ये । १२. B : न्यर्था । १३. B : न्य ।
१४. A : विकल्प ।

विशेषणं विजातीयं तच्च ज्ञाने जडं भवेत् ।
न जडस्य प्रवेशोऽस्ति ज्ञानात्मनि कथञ्चन ॥ ३० ।

परस्परविरुद्धा हि जडचेतनयोः स्थितिः ।
प्रकाशस्य तमः शक्तं न विशेषयितुं क्वचित् ॥ ३१ ।

पूर्वापरेण सम्बन्धमशक्यं भिन्नकालता ।
पौर्वापर्ये यतो हेतुस्तच्चैकस्तु[1] कथं न सः ॥ ३२ ।

अथ निर्विषयं ज्ञानं न क्षमं[2] भवितुं यदि ।
विषयोऽपि कथं शक्तः स्थातुं विषयिणा विना ॥ ३३ ।

परस्परविधातृत्वं यदि वा मतमेतयोः ।
तदयुक्तं यतः कार्यात् कारणं पूर्वमिष्यते ॥ ३४ ।

परस्परानपेक्षा चेत् सत्ता विषयतद्वतोः ।
सिद्धा सिद्धो विकल्पस्य[3] स्वात्मैव हि तथाविधः[4] ॥३५॥

विकल्पात्मनि सर्वत्र[5] व्याप्य [6]चेदास्थिता चितिः ।
विकल्पस्य विकल्पत्वं[7] किं तज्ज्ञानातिरेकि यत् ॥ ३६ ।

विषयान्न विकल्पत्वं[8] न स्वरूपाच्चिदात्मकात् ।
विकल्पस्य विकल्पोक्तिस्तदिदं खे विलीयते ॥ ३७ ।

यैर्विकल्पात्मनि ज्ञानं सर्वमेव प्रतिश्रुतम्[9] ।
[10]तैरर्थान्निर्विकल्पं तदुक्तं स्वात्मन्यकल्पनात् ॥ ३८ ।

यैर्वा विकल्पहेतुस्तद्विकल्पे किं न बोधता ।
[11]बोधता चेत् कुतो भेदो न हि स्वात्मनि भिन्नता ॥३९।

---

१. AB : स्तों चेकं ।  २. B : क्षमं च ।  ३. B : विकल्पोऽस्य ।
४. B : तथाविधिः ।  ५. B : संवृत्त ।  ६. B : वेद- ।
७. B : विकल्पत ।  ८. A : विकल्पत्व । B : विकल्प ।
९. B : प्रतिस्फुतम् ।  १०. B : तैर ।  ११. A : भेधता ।

४

अबोधता विकल्पे चेत् कथं विज्ञानजन्यता ।
नोपादानं विरुद्धस्येत्येवं [1]नान्यगतिस्थितेः ॥ ४० ।

अन्यत्वे च विरुद्धत्वाद् ज्ञानं नैवोपपद्यते ।
विरुद्धत्वं विनान्यत्वे स्वात्मैव हि न किं परः ॥ ४१ ।

तस्मादस्तीह विज्ञानं नित्यं सहजनिर्मलम् ।
एकं विचाररहितं यद्योगिभिरुपास्यते ॥ ४२ ।

एवं चेज्जगतश्चित्रा संस्थितिः किं कृता मता[2] ।
अविचित्रात् [3]तु [4]विज्ञानाद् वैचित्र्यमुपपद्यते ॥ ४३ ।

अत्रोच्यते न वैचित्र्यं पदार्थेषूपपद्यते ।
सर्वस्यात्मैकनिष्ठत्वात्[5] परेण च न सङ्गमात् ॥ ४४ ।

तद्वद्भावैकतात्यागात्[6] तत्त्यागे चित्रता गतेः ।
पृथग्बाह्येषु[7] दृष्टेषु [8]बहुभिन्नास्ति चित्रता ॥ ४५ ।

एकबुद्धिसमारूढे चित्रत्वे का विचित्रता ।
पृथक् स्थितेषु[9] बाह्येषु का भावेषु विचित्रता ॥ ४६ ।

ज्ञानस्य च विचित्रत्वं [10]स्वप्नेऽपि न यदा हृतम् ।
प्रबुद्धे तदिहादित्वमिति केनावगम्यताम् ॥ ४७ ।

जागरायां यथा बुद्धेः[11] [12]स्वप्नज्ञानमसत्कृतम् ।
जागरापि तथा शुद्धज्ञानात्मभिरसत्कृता ॥ ४८ ।

---

१. A : न्याय- ।
२. B : सता ।
३. A : अविचित्रा तु B : अविचिन्नान्नः ।
४. AB : विज्ञाताद् ।
५. B : निष्टत्वात् ।
६. B : ननुद्धावेकता ।
७. B : पृथगङ्गेषु ।
८. B : वङ्गभिज्ञास्ति ।
९. B : पृथकियतेषु ।
१०. B : स्वमे ।
११. B : बुद्धेः ।
१२. B : स्वम- ।

तस्माद् यैरुच्यते मूढैर्विचित्रेयं प्रथा कुतः ।
ते प्रत्युक्त्या विचित्रत्वस्यैकवस्तुसमाश्रितेः ॥ ४९ ।

यस्मान्निरंशे विज्ञाने चित्रतायाः समुद्भवः ।
[1]सांशे [2]भवेयुस्तेऽप्यंशा भिन्नता नास्ति वै यतः ॥ ५० ।

तेन[3] विज्ञानविज्ञेया [4]तत्रान्येन न संस्थितिः ।
तस्माज्ज्ञानमसंक्रान्तरूपं शक्तं न [5]तदृते ॥ ५१ ।

रूपसङ्क्रान्तिमेतस्य भागवृत्तां[6] प्रकल्पयेत् ।
सा चास्मिन् दुःशका ज्ञातुं तेन न ज्ञानचित्रता ॥ ५२ ।

ज्ञानेन न[7] यदादिष्टं न तद् [8]ग्राह्येण गम्यते ।
तथैकतायां चित्रत्वमपि बाह्येऽतिदुष्करम् ॥ ५३ ।

अनेकता चित्रता हि सा चैकत्वविरोधिनी ।
ज्ञानज्ञेयपरित्यागाच्चित्रता शब्दमात्रकम् ॥ ५४ ।

एवं वैचित्र्यसद्भावे प्रतिषिद्धे पराकृता ।
मातृमानप्रमेयाणां[9] पृथक्त्वानामपि[10] स्थितिः[11]॥ ५५ ।

एतत्त्रयपरित्यागे येन रूपेण भूयते ।
तेनैव सत्यं विज्ञेयं तदन्यदसमञ्जसम् ॥ ५६ ।

विलीयमाने पुरतः स्वात्मस्थस्यासमञ्जसे ।
प्रपञ्चेऽस्मिन्नविश्वासे विश्वस्तास्ते[12]कथं चिरम् ॥५७ ।

स्वप्ने वापि समाश्वास इत्थं केन निवारितः ।
नहि स्वप्नेन दृश्यन्ते भावा बहुविधा बहिः ॥ ५८ ।

---

१. B : संशे ।   २. B : भावेयुस् ।   ३. AB : तेन्य ।
४. AB : स्तत्र ।   ५. A : तं द्रिती, B : ते द्रती ।   ६. A : भागवतां ।
७. A : नास्ति ।   ८. AB : ग्राह्यं व ।   ९. B : प्रमेयानां ।
१०. B : पृथक्यानामपि ।   ११. A : श्लोकाः ३।३१-४२ ३।५४—५५ श्लोकयोर्मध्ये विद्यन्ते ।   १२. AB : विश्वस्ताः ।

स्वप्ने[1] भीतैः प्रयत्नेन प्राप्यते जागरा यथा।
जागरायां तथा दुःस्थैर्यत्नाल्लभ्या परात्मता ॥ ५९ ।
इति वामनदत्तेन विकल्पोऽपस्तवः कृतः।
य एनमवगाहन्ते बाध्यन्ते ते न विप्लवैः[2] ॥ ६० ।

॥ इति विकल्पविप्लवो नाम तृतीयं प्रकरणम्[3] ॥



---

१. B : स्वप्न। २. B : विस्नवै। ३. A : श्लोकाः ६१।

# अथ चतुर्थं प्रकरणम्

यज्ज्ञेयं पुरुषेणेह संसारविचिकित्सुना ।
तदुच्यते यथाम्नायं न्यायानुभवसम्मितम् ॥ १ ॥

देहश्च कार्यो भूतानां तानि शक्त्युद्भवान्यपि ।
सा विद्या प्रकृतिर्मायेत्यादिशब्दाभिधेयताम् ॥ २ ॥

प्रतिदर्शनभेदेन प्रतिपन्ना निजाकृतिः[१] ।
अमुश्चती पारतन्त्र्यमीश्वरादिपदाभिदे ॥ ३ ॥

ततोऽप्यभिन्ना भिन्ना[२] वेत्यभिधातुं न शक्यते ।
न हि नित्यैकरूपस्यानित्यं बहुविधं वपुः ॥ ४ ॥

न भिन्नं शक्यते वक्तुमपृथक् सिद्धयोगतः ।
सत्येयमस्त्वसत्या वा नास्माकमुपयुज्यते ॥ ५ ॥

अस्या हेयैकरूपत्वादलं रूपनिरूपणैः ।
किन्त्वविज्ञातरूपस्य हेयतैव न बुध्यते ॥ ६ ॥

तेन हेयत्वविज्ञाने विज्ञेयेयं न रूपतः[३] ।
यद् यत् कर्मपदं[४] प्राप्तं तत् तद्धेयं विचक्षणैः ॥ ७ ॥

कर्मणश्च परित्यागात् कर्तृतापि विलीयते ।
कर्तृकर्मपरित्यागाद् यन्मातुरवशिष्यते[५] ॥ ८ ॥

तदुपादेयतां यातमेतयोः परिहारतः ।
[६]नित्यलब्धतयाप्यस्य लब्धकः[७] केन[८] लभ्यते ॥ ९ ॥

---

१. AB : निजाकृतेः । २. AB : भिन्नभिन्ना । ३. B : रूपता ।
४. AB : -पद । ५. B : -मातर- । ६. A : नित्यब्धप्य,
B : नित्यलनुभयाप्य । ७. AB : लब्धाकः । ८. AB : कश्च ।

यद् यस्य[१] कर्मपदवीमुपारोहति देहिनः ।
अशरीरं तदा ज्ञेयं[२] सर्वं विद्याविजृम्भितम् ।। १० ।

हेतुः[३] सा देहवैचित्र्ये सर्वेन्द्रियतया बहिः ।
सप्तधात्वात्मनाप्यन्तस्त्रिधातुकतयापि[४] वा ।। ११ ।

एका सा विविधावस्था चराचरतया स्थिता ।
द्विषट्कपत्रं सा पक्षं कालमाधारमाश्रिता ।। १२ ।

व्यज्यते कलनात् तस्याः कालः कालत्वमागतः[५] ।
सोत्पादक्षयरूपेण भावानां कालकर्षणी ।। १३ ।

क्रियात्मको हि यः कालः क्रियाकारकमाश्रितः[६] ।
षोढा च कारकग्रामः[७] शक्त्यात्मनि हि तिष्ठति ।। १४ ।

शक्तिर्द्रव्याश्रिता नित्यं तत्परं ब्रह्मशब्दितम् ।
तत्समुत्था व्याप्रियते परे सा विश्वकर्मणि ।। १५ ।

सा स्वसंस्कारचिह्नेन प्रत्यगात्मानमात्मनः[८] ।
उपोद्धरति संलीनं प्रलये वासराचितम् ।। १६ ।

तस्याधारतयात्मानमपि सैव व्यधात् तथा ।
यथायमीश्वराज्ञास्थो वर्तते भोगमोक्षयोः ।। १७ ।

स तु तस्यां यदोद्विग्नो मोक्षसंस्कारचोदितः ।
तदा पलायते तस्या येनैवायमिहागतः ।। १८ ।

विषयावनिपर्यन्तं स कृत्स्नो ब्रह्मणस्तथा ।
ततस्तामेव पूर्वं स विचिकित्स्यतयाश्रितः ।। १९ ।

---

१. AB : यद्यश्च । २. AB : स्थेयं । ३. AB : हेतु ।
४. AB : -स्त्रे- । ५. AB : -गताः । ६. AB : -ाश्रिता ।
७. AB : - ग्राम । ८. A : -नामात्मनः, B : -ननात्मनः ।
९. B : -ाप्र- ।

को यो हि विषयो नाम स्वतन्त्रस्य समास्थितः ।
मायेयं यन्न जानाति तत्त्वमस्य विवेचयन् ॥ २० ।

एकोऽयं स्यादनेको वा तत्त्वमत्र न बुद्ध्यते ।
एकत्वेनास्ति वै तथ्यं वैतथ्ये चैकता कथम् ॥ २१ ।

अहमेको निरंशश्च सांशानेकग्रहक्षयः ।
कथं स्याद् ग्रहणं तद् वा कस्य धर्मोऽवसीयताम् ॥ २२ ।

पृथक्स्थयोर्द्वयोर्नो[1] यत् तच्चेत् सङ्गतयोः स्थितम् ।
माया न यदि तत् कोऽर्थः[2]स स्यादिति विवेच्यताम् ॥ २३ ।

इत्थं विषयनिष्पेषे यदिन्द्रियसुखेन यत् ।
ज्ञायते वस्तुनो रूपं न तत् किञ्चिदिति स्थितम्[3] ॥ २४ ।

इन्द्रियस्यापि विषयाभावात् करणता क्व नु ।
एवं या गोलके शक्तिरैन्द्रियी सा विलीयते ॥ २५ ।

अस्तु वा विषयो नाम कथञ्चिदुपपादितः ।
तथापि तत् तत्त्वविदां न सम्मोहयितुं क्षमः ॥ २६ ।

विषयस्यापि यद् रूपं सूक्ष्मं तदपि भावयेत् ।
स्वदेहेन्द्रियदेशेषु यत्र यत् संविदा स्थितिः ॥ २७ ।

जपन् भगवतो नाम स तस्यैव वशो भवेन् ।
तद्वशत्वे स विषयो न स्यात् क्वापि निबन्धकृत् ॥ २८ ।

मूले मध्ये तथाग्रे च शब्दस्पर्शरसाश्रयम् ।
विज्ञेयमिन्द्रियं स्वं स्वं जिह्वायां सह संविदा ॥ २९ ।

रसना यत्र चोत्क्षिप्ता किञ्चिद् विकिरति[4] स्वयम् ।
तद्रूपसंविदः क्षेत्रं तज्ज्ञानेनावधारयेत्[5] ॥ ३० ।

---

१. B : पृथक्ययोर् । २. A : तर्को भूः । ३. A : संस्थितम् ।
४. AB : विकरति । ५. A : -ज्ञानं तत्र ।

घोणाग्रे[1] धारयेद् विद्वानिन्द्रियं गन्धसंविदः ।
एकस्माद् येन चोत्पत्तिर्मता विषयतद्वतोः ॥ ३१ ।

मनःक्षेत्रं तथा कण्ठो बुद्धि शिरसि धारयेत् ।
उरसोऽन्ते समूहं च यत्र सत्त्वं रजस्तमः ॥ ३२ ।

आवापयति विज्ञानं कर्मिणो विकलस्थितेः ।
तेन तत्र समादद्यात् परिशुद्धेन चेतसा ॥ ३३ ।

व्यज्यते तत्र कर्मात्मा सर्वसंस्कारसंस्कृतः ।
तस्यापवर्गसंस्कारेष्ववधेयं कृतात्मना[2] ॥ ३४ ।

ते हि संस्कारसंस्कारविरोचकतया यतः ।
वर्तते तेन तेष्वेव मुमुक्षुर्यत्नवान् भवेत् ॥ ३५ ।

स्तनस्याधो [3]वामपार्श्वे दोषस्थानमनुस्मरेत्[4] ।
तद्बुभूषान्[5] ततो दोषान् वारयेच्छुद्धचित्स्मृतिः ॥ ३६ ।

उरोहृदययोर्मध्ये कालपुष्करमास्थितम् ।
धारयेत् तत्र विज्ञानमिन्द्रियं तद् विवेचकम् ॥ ३७ ।

ततो मध्यमनाड्यात्मा विवेच्यो यत्र सन्निधिः ।
अध्यक्षस्यात्मनि[6] खस्थः स इष्टो योगिभिर्यतः ॥ ३८ ।

[7]आद्यैव सा परा शक्तिः कर्मकारितया स्थिता ।
भूतात्मना च विद्येति तामाहुर्ब्रह्मवादिनः ॥ ३९ ।

तन्वी नीवारा शूकाभा नैतद् यत्र न सा स्थिता ।
तन्मध्यविनिविष्टानां नास्ति सङ्कल्पसम्भवः ॥ ४० ।

सङ्कल्पासम्भवात् तत्र न मृत्युर्बाधते बुधान् ।
मृत्युः सङ्कल्पजन्मैव[8] निर्विकल्पेषु नास्त्यसौ ॥ ४१ ।

---

१. B : घोणाग्र । २. A : हृतात्मना । ३. B : वा स ।
४. B : स्थानम् । ५. A : बुभूषं, B : बुभूषे ।
६. B :-ादनी । ७. AB : अदन्येव । ८. B : -त्मैव ।

ममेति[1] च भवेन्मृत्युर्न ममेति तदत्ययः ।
सङ्कल्पमूलममता तन्निषेधे कुतः सृतिः[2] ॥ ४२ ।
ममतापि च सङ्कल्पः सोऽन्यसङ्कल्पकारणम् ।
ज्ञेयः स स्पन्दजो नित्यं स स्पन्दो न विकल्पगः ॥ ४३ ।
न च प्रवेशो दुःसाधस्तत्र ज्ञेयो विचक्षणैः ।
यथा स भगवान् साक्षात् प्रादिशत् तत्र भारते ॥ ४४ ।
समकायशिरोग्रीवं[3] धारणाच्चिन्तनागतिम् ।
यावन्न तत्र संविष्टस्तावन्नास्त्यविचिन्तनम् ॥ ४५ ।
तस्या विचित्रनिर्माणो योऽयं ब्रह्माण्डसंज्ञितः ।
तस्याः पर्वसु विश्रान्ताः सप्तेमे लोकधातवः ॥ ४६ ।
द्वासप्ततिः सहस्राणि नाडीनां यानि तानि सा ।
तिर्यगूर्ध्वमधस्ताच्च चक्रे विपरिवर्तते ॥ ४७ ।
चराचरस्य जगतस्तामाहुर्जननीं पराम् ।
तया यद् यदनुज्ञातं तत् तद् भवति कुत्रचित् ॥ ४८ ।
सर्वस्य[4] च जगत् सर्वं तयात्मनि निवेदितम्[5] ।
तेन येन जनो मा भूदेष क्वापि[6] कुतूहली ॥ ४९ ।
सोत्पत्तिशक्तिः कर्माग्रे हृदये स्थितिसाधनी[7] ।
संहाररूपा भ्रूमध्ये तदूर्ध्वे निर्विशेषणा ॥ ५० ।
य एनां समुपासन्ते शक्तिं संदर्शनेप्सवः ।
तेषां स्वयं समायाति देवी [8]सा हृदयाम्बुजम् ॥ ५१ ।
स्वसङ्कल्पविनिर्माणे विश्वपक्षे कृतालया ।
अन्तर्ध्वनन्ती[9] मधुरं लभ्यते शक्तिषट्पदी ॥ ५२ ।

---

१. AB : समेति । २. A : कुतो मृतिः । ३. AB : -ग्रीव ।
४. B : सयस्य । ५. B : निवेशितम् : ६. B : क्तापि ।
७. B : -ष्विति । ८. AB : नास्ति । ९. B : अन्तर्धनन्ती ।

अनाश्रयस्य सा पत्युर्विहितान्तःपुरं सती ।
हृत्पक्षमध्ये त्वात्मा सा मध्यनाडितया स्थिता ॥ ५३ ।
यदुद्यमननिष्पादी कालः कलयति प्रजाः ।
यास्तयैव भविष्यन्त्यात्मस्वरूपेण संसृताः ॥ ५४ ।
अनभिव्यक्तरूपादिव्यक्तात्मनि वपुः प्रभोः[1] ।
भाविविश्वतया लब्ध्वा सजीवेव सुखं स्थिता ॥ ५५ ।
न केवलं भोक्तृतया तयास्य[2] वपुराहितम्[3] ।
यावच्छरीरमप्यस्य स्वयं भोग्यतयाहितम् ॥ ५६ ।
अत्यन्तरागहृतया न तयात्मनि शेषितम् ।
किञ्चित् स्वतन्त्रं यत्रास्याः पतिभोग्यत्वमागतम् ॥ ५७ ।
येन येन स्वभावेन सास्य देहोपकारिणी ।
तेन तेन स्वरूपेण बहिर्विषयदाप्यसौ ॥ ५८ ।
अन्तर्भवन्त एवास्या लभन्ते परमं प्रभुम्[4] ।
अनन्तरा[5] य एतस्या न लभन्ते कदाचन ॥ ५९ ।
पथारोहक्रमेणैव[6] तत्तदैश्वर्यदा भवेत् ।
यावत् सर्वेश्वरमपि प्रयच्छति हृदि स्थितम् ॥ ६० ।
अटवी[7] ब्रह्म नाडीति समा सापि च पिङ्गला ।
चराचरस्य लोकस्य मध्यमा मध्ययोगतः ॥ ६१ ।
आभाति[8] वसते[9] यावद् भानुमण्डलमध्यगा ।
वर्तते कालकर्मात्मविद्यारूपस्वरूपिणी ॥ ६२ ।
तदन्या द्वारसंरोधे यस्तदाकाशगोचरः ।
लभते स परं स्थानं[10] यतो भूयो न संसृतिः ॥ ६३ ।

---

१. B : प्रभो । २. B : तथा । ३. B : वपुरहितम् ।
४. A : विभुम् । ५. A : रज्ञा, B : गज्ञा च । ६. B : पर्वाग्रहे ।
७. A : अचरी । ८. AB : आभोगि । ९. B : वमते ।
१०. B : ध्यानं ।

तस्या यः कर्मदेशस्थो भागो [1]रोमानुसंज्ञितः ।
[2]स वासुदेवस्यावासस्तत्र तं चिन्तयेदजम् ॥ ६४ ।

अनादिनिधने देवे[3] विश्वस्य प्रभवाप्ययम् ।
ज्ञानक्रियेच्छाशक्तीनां कारणं निर्गुणं विभुम् ॥ ६५ ।

ज्ञानशक्तेरधिष्ठाता[4] तदूर्ध्वे चतुरङ्गुले ।
ध्येयः संकर्षणो देवो नाभिमण्डलमध्यगः ॥ ६६ ।

तदूर्ध्वमेतावत्येव क्रियाशक्तेरपि प्रभुः ।
प्रद्युम्ननाम मध्ये यो स[5] ईष्टे सर्वधातुषु ॥ ६७ ।

एतावत्येव तु पुनः प्रदेशे पृष्ठवर्तिनि ।
ध्येयोऽनिरुद्ध इच्छाया नाथो ब्रह्मसमुद्भवः ॥ ६८ ।

हृदयात् कण्ठदेशान्तं[6] यावत् तत्स्थानमिष्यते ।
प्रभवोऽयं क्रमः प्रोक्त आप्ययोऽयमतः परः ॥ ६९ ।

अनिरुद्धोऽपि यात्येव प्रद्युम्नं मुखमास्थितम् ।
प्रद्युम्नो याति संकर्षं[7] कालज्ञानात्मकं विभुम् ॥ ७० ।

ललाटदेशाधिष्ठानं[8] स चेष्टस्तदुपासकैः ।
स हि[9] सङ्कल्प्य[10] सकलं[11] प्रयाति परमेश्वरम् ॥ ७१ ।

वासुदेवमजं नित्यं परं कारणमव्ययम् ।
सर्वमूर्ध्नि स्थितं देवं सर्वव्यापिनमुत्तमम् ॥ ७२ ।

कालः पचति भूतानि सर्वाण्येव महात्मना ।
कालः पक्वो [12]यमं त्वेति यस्तं वेद स वेदवित् ॥ ७३ ।

---

१. B : -देस्याभामोसेमोत । २. B : सर्वा । ३. A : -निधनं देवं ।
४. B : -घिष्टाता । ५. AB : य । ६. B : -देशान्ते ।
७. B : संकर्षे । ८. AB : -ाघिष्टानं । ९. AB : नास्ति ।
१०. B : संकलप्य । ११. AB : सकले । १२. AB : यमत्येति ।

तस्येयं कल्पनाद्या यत्[1] कन्दे[2] मूर्ध्नि हृदि स्थितिः ।
सर्वात्मनोऽन्यथा[3] तस्य कः स्थाने नियमक्रमः ॥ ७४ ।

ततः समुत्थिता भावाः प्रतियान्ति तमेव च ।
एतावत्येव [4]कर्तव्ये [5]प्रतिपत्तुरयं क्रमः ॥ ७५ ।

इति सर्वज्ञताज्ञप्त्यै[6] सर्वज्ञैः सम्प्रदर्शितः ।
न चायमेव नियमः किन्त्वयं योग्यताश्रयः ॥ ७६ ।

व्यवहारो न कर्तव्यः[7] [8]क्वचिद् दृष्टमतोऽन्यथा ।
तथाप्येके हि मन्यन्ते [9]धारणामिन्द्रियैः सह ॥ ७७ ।

हृद्येवैति ततोऽप्यन्यद्वह्यमागमपण्डितैः[10] ।
तथाह्युक्तं[11] मद्दुहित्र्या[12] वामदेव्या हरिस्तुतौ ॥७८ ।

उपासानियमाभावो [13]ह्यविकारसमाश्रयात् ।
सर्वाङ्गं सर्वतो देवं त्वां मत्वा सर्वसंस्थितम् ॥ ७९ ।

उपासानियमो नेष्टः कैश्चिदुद्दामचेष्टितैः ।
आगमेऽपि[14] पुनः प्रोक्तं नियमाभावसूचकम् ॥ ८० ।

विकल्पशमनाच्छास्त्रमिच्छत्याप्तिं परात्मनः ।
येन येन लघूभूतं मनः शाम्येदयत्नतः ॥ ८१ ।

सहेन्द्रियैः सह प्राणैस्तत् तदेवाचरेत् ततः ।
यथा महाह्लदः क्षुब्ध[15] आत्मन्येव प्रसीदति ॥ ८२ ।

तथा विद्वान् धृतप्रज्ञ आत्मन्येव प्रसीदति[16] ।
आत्मप्रसादप्राप्त्यर्थं यतन्ते[17] सर्व आगमाः ॥ ८३ ।

---

१. A : -स्तु । २. B : कर्मे । ३. B : -त्मता ।
४. AB : हर्तव्ये । ५. B : प्रतिपन्ने । ६. B : -ज्ञप्तै ।
७. AB : गन्तव्य । ८. AB : कश्चिद् । ९. AB : धारणम् ।
१०. AB : -वह्यम- । ११. AB : ह्युक्तं । १२. A : दुहित्रा ।
१३. A : -धिकारि- । १४. B : अगमे । १५ B : वस ।
१६. B : इयं पङ्क्तिर्नास्ति । १७. B : येन ते ।

आत्मा च भगवान् देवो वासुदेवः परो मतः ।
[1]गुणप्रथनयोगाभ्यां सेवित्वा ते मुमुक्षवः ॥ ८४ ।

प्राप्नुवन्ति[2] परं धाम यतो भूयो न सम्भवः ।
स संकर्षणश्च प्रद्युम्नः[3] सोऽनिरुद्धः प्रकीर्तितः ॥ ८५ ।

तत्र प्राप्तस्य वेद्मीति नास्ति संकल्पसम्भवः ।
यत्प्रकाशैकनिष्ठं[4] हि तत् पदं परमेष्ठिनः ॥ ८६ ।

वेद्मीति प्रत्ययाद् विद्वान् न वेद्मीति तदत्ययः ।
[5]स त्वात्मानं न जानाति स हि ज्ञानमयो यतः ॥ ८७ ।

तद् वेत्ति विद्वांस्तद् वेद्यं नातोऽन्यद् वाग्मिता सताम् ।
यदीदमस्ति नो चेत् [6]तत् तदेव प्रथते स्वयम् ॥ ८८ ।

एतावद्भिरिवा विद्या विज्ञेया हेयताकृतेः[7] ।
अङ्गीकृत्यापि विषयं तत्तत्त्वज्ञो न मुह्यति ॥ ८९ ।

तत्स्वरूपपरिज्ञानमिन्द्रियेष्वेव निष्ठितम् ।
तेनेन्द्रियाश्रयेष्वेव धारणासु विधिः स्मृतः ॥ ९० ।

एताव × × × ×
× × × ×
× × × ×
स्वेनात्मना सकलकल्पनिराकृतेन[8] ॥ ९१ ।

---

१. AB : -प्रधान- । २. B : प्रामुवन्ति ।
३. AB : संकर्षणप्रद्युम्नौ । ४. AB : निष्टं ।
५. AB : न । ६. AB : सत् ।
७. AB : -ाकृते । ८. A : निाकृतेन ।

[1]संकल्पसंततिनिवृत्तिरुपेति साम्यात्
साम्यं तथा हृदयपक्षसमाश्रयेण ।
मध्ये निधाय कमलस्य च चित्स्वरूपं
स्वं तत्त्वमेति विमलं कलनाविमुक्तः ॥ ९२ ।

नायं जिघृक्षति यदा किमपीह वस्तु
नो वा जहाति न चिकीर्षति किञ्चिदेव ।
विद्वेषदोषपरिवर्जितचित्तवृत्तिः
साम्यात् स्वरूपमुपयाति निवृत्तबन्धः ॥ ९३ ।

नायं यदा भवति [2]मेघनिषण्णचित्तो
नो वा [3]बुभूषुरपि तत्सकलात्मवृत्त्या ।
नो मध्यमामपि दृशं प्रतियाति यत्नात्
तत्त्वं तदा समुपयात्यखिलस्वरूपम् ॥ ९४ ।

तत्त्वं यदा निजमवेत्य[4] विरुद्धवृत्तिः
सर्वेण सर्वरचितं रहितं च सर्वैः ।
आकाशकल्पमथवा चलसिन्धुतुल्यः
[5]स्वं रूपमेति हि तदा परिशुद्धबुद्धिः ॥ ९५ ।

सर्वत्र साम्यमुपयाति यदा स्वदेहे
नाधिक्यमेति हृदये न च कण्ठमूर्ध्नोः ।
संविद् विचारशिथिला बहिरन्तरस्य
[6]प्राप्तं तदा भवति [7]रूपमिदं पुराणम् ॥ ९६ ।

---

१. A : सकल्प- । २. A : मेघ । ३. A : वायुभूष- ।
४. A : निजमेवंत्य । ५. A : स्वे । ६. A : प्राप्तस् ।
७. A : रूपमयं ।

[1]भेदं न वेत्ति जडचेतनयोर्यदैव
न स्पन्दते हृदयसद्मनि[2] मध्यसंस्थः ।
भारूपमात्रपरिशेषितसर्वभावः
प्राप्तं तदा भवति [3]रूपमिदं पुराणम् ॥ ९७ ।

एकायने प्रसूतस्य कश्मीरेषु द्विजात्मनः[4] ।
कृतिर्वामनदत्तस्य सेयं विद्यासमाश्रया ॥ ९८ ।

॥ इति विद्याविवेको नाम चतुर्थं प्रकरणम् ॥



१. A : भेदेन । २. A : -पद्मनि । ३. A : रूपमयं ।
४. A : द्विजत्मनः ।

## अथ पञ्चमं प्रकरणम्

देशकालगुणकार्यंद्वारगं
सर्वतः सममनीशमीश्वरम् ।
[1]आमनोनियमशब्दगोचरं
सर्वशब्दविषयं च नौमि तम् ॥ १ ।

त्यागसंग्रहविधानुपासिभिः
सर्वतः समतया समाश्रितैः ।
सर्वभूतगुणकार्यवर्जितै-
र्भूयते ध्रुवमज त्वदात्मता ॥ २ ।

नैव तत् क्वचन किं च यन्न तत्
त्वद् विना ननु किमर्थमीशषे ।
स्वात्मनः प्रभुरतोऽपि सन्मतः
स्वप्रभापरिकरः सुदर्शनः ॥ ३ ।

सर्वशक्तिपरिवारदृश्यया[2]
यः श्रिया भुवनपद्मसंस्थया ।
सेव्यते बहुविधं त्रिभेदया
नौमि तं परमकारणं हरिम् ॥ ४ ।

मध्यमाभिमतमध्यखेचरः
कण्ठमूलधरणान्त उत्पतन् ।
[3]प्राप्यसे प्रणवपाशवेष्टितो
योगिशाकुनिकदृष्टिगोचरः ॥ ५ ।

---

१. A : आमन- । २. A : -दृश्या । ३. A : प्राप्य मे ।

स्वप्रकाशवपुषः समुत्थिता
नादशक्तिरिह विश्वकारणम् ।
कर्तृकर्मकरणादिभेदगां
सा बिभर्ति तनुमष्टमूर्तिकाम् ॥ ६ ।

शब्दशक्तिरविभागमागता
बिभ्रती सकलविश्वरूपताम् ।
सेव्यते प्रतिभयैव शुद्धया
त्वत्समागमविधानहूतिका ॥ ७ ।

भोक्तृभोग्यविषयस्य वस्तुतः
साग्निचन्द्रजननेन ज्ञायते ।
मातृका इव पितुः समागमा-
देव या मसृणमारुतेरिता ॥ ८ ।

वाच्यवाचकविभागवर्जितं[1]
नेह किञ्चिदुपपत्तिभाग् यतः ।
त्वामृते तत इयं भवद्वशाद्
द्वैधमेत्य बहुधा विवर्तते ॥ ९ ।

आद्यबीजसमवस्थितिः[2] सदा
ज्ञायते न तु तदेति[3] चाप्ययम् ।
तत्स्वरूपपरिलब्धवृत्तिभि-
र्भूयते विभुतयैव[4] बुद्धया ॥ १० ।

---

१. A : -विवर्जितं । २. A : -समवस्थितिः ।
३. A : ननवदेति । ४. A : विभु तथैव ।

तद्विवृत्तिरुदिता [1]जगत्पति-
स्तद् विना भवति नैव येन सा[2] ।
तत्स्वरूपघटिता[3] विलुप्यते
तद्विवृत्तिरिति कथ्यते बुधैः ॥ ११ ॥

तद्द्वितीयकलनात् कलावतः
[4]कालताप्तमिह सम्भवो भवेत् ।
दीर्घतामिव यतः [5]समागतं
भाति [6]यत् स्वमपि नाथ ते वपुः ॥१२॥

तत्तृतीयलब्धरूपवर्णता
[7]पञ्चप्राणसहिता निगूहिनी ।
तावके वपुषि वर्णसंग्रहा
शक्तिरुद्भवति विश्वरूपिणी ॥ १३ ॥

ॐ रूपं[8] किं[9] सिद्धमेतत् तन्नान्यद्
[10]वाच्येऽनित्ये वाचको नह्यनित्यः ।
वाच्यं ब्रह्मप्रणवस्यैव सिद्धं
दिक्कालाद्यैर्यत् परिच्छिद्यते न ॥ १४ ॥

तेनैवायं सर्ववेदेषु पूर्वं
स्वाध्यायादौ वेदविद्भिः प्रणीतः ।
तस्मिन्नुक्ते वाचि [11]यत् सम्मुखत्वे
तन्नः सिद्धं सर्वदा च भवद्भ्यः[12] ॥१५॥

---

१. A : जगति- । २. A : मनसा । ३. A : -गतितो ।
४. A : कालतम्नसह । ५. A : समागते । ६. A : नास्ति ।
७. A : -साण- । ८. A : स्वरूपं । ९. A : कं ।
१०. A : बाम्ये । ११. A : नास्ति । १२. A : घभूम्यः ।

तस्मिन्नन्तः सर्वसिद्धं प्रविष्टं
[1]वाचस्तत्त्वं वाग्विवर्तं[2] च सर्वम् ।
अन्त्यौ स्वरौ बिन्दुविसर्गयुक्ता-
वाद्यस्य दीर्घेण परेण भेदः ॥ १६ ।

तथैव पञ्चार्णविभेद उक्तः
षष्ठस्तथाद्यावपि चान्त्ययोर्यौ ।
योऽन्तः परोऽपि स्वरवर्णवर्ग-
स्तृतीयमूलो विबुधैरपीष्टः[3] ॥ १७ ।

शाक्तं यथैतावदिह प्रदिष्टं
वर्णद्वयं सर्वविकारबीजम् ।
अधिष्ठितं यत् परमेण पुंसा
प्रागन्तयोरच्युतरूपिणैव ॥ १८ ।

मूलं तदेवेह निरस्तरूपं
सर्वार्णरूपं प्रथमं यदाहुः ।
तस्माज्जाताः सर्ववर्णस्य भेदा
येषां विश्वचित्ररूपानुकारि ॥ १९ ।

एककादिपरिपोषितं क्रमात्
सर्वषट्कपरिपूर्णविग्रहम् ।
वर्णषट्कमिह विश्ववस्तुनः
सूक्ष्मतां समुपगृह्य वर्तते ॥ २० ।

वर्णपङ्क्तिरियमेत्य चित्रतां
संस्थया विविधया विवर्तिता ।
वाक्यतामथ पदानुसंधितां
लोकसंविधिकृते प्रपद्यते ॥ २१ ।

---

१. A । -स्तत्त्व । २. A । -विवर्तं । ३. A । -धीष्टः ।

यत् तु पूर्वमविभक्तरूपया
शुद्धया प्रतिभया समाश्रितम् ।
लौकिके न तदुपैति वाक्यतां
वक्तरीच्छति परप्रबोधनम् ॥ २२ ।

वर्णषट्कमिदमेव तत् स्वयं
सूर्यसोममयतां समाश्रयत् ।
द्वादशार्णविधिना दिनं व्यधात्
षोडशार्णविधिना च शर्वरीम् ॥ २३ ।

षोडशार्णविधिमध्यसंस्थितं
यन्नपुंसकचतुष्टयं विधौ ।
तन्मलं शशितयोदितं बुधै-[1]
स्तद्वशादुभयहानिभागयम् ॥ २४ ।

दक्षिणेन दहनात्मतां दधद्
दाह्यतामपि तथोत्तरेण तु ।
मध्यमेन तु समत्वदक्षिणो-
त्तरं दधच्चास्ति तयोः प्रवर्तकम्[2] ॥ २५ ।

वागेवास्याः कारणं विश्ववृत्ते-
[3]र्न्याय्यं चैतन्नागमः केवलोऽयम् ।
नासंकल्पं किञ्चिदस्तीह कार्यं
वाचं विना न विकल्पोऽस्ति कश्चित् ॥ २६ ।

नावर्णा वाग्वाचिका किञ्चिदेव
वर्णास्त्रिंशद् विंशतिश्चैकरिक्ताः ।
[4]वर्णा नादात् [5]सम्भवन्त्येवमेव
नादः श्रेष्ठः[6] प्रणवप्राण एकः ॥ २७ ।

---

१. A : बुद्धैस् ।   २. A : -त्तरमथ प्रवार्यकम् ।   ३. A : न्यायं ।
४. A : वर्णाः ।   ५. A : संभवत्य- ।   ६. A : श्रेष्टः ।

तस्मान्नादात् प्रणवप्राणनोर्ध्वाद्
भेदं प्राप्तं[1] द्वादशानां चतुष्कम्[2] ।
एकश्चार्णो यः परं ज्ञानमुक्तो
[3]यत्प्राणो वाग् विश्वमेतत् तनोति ।।२८।

ॐकारोऽयं प्रतिभा विश्वकर्तु-
[4]र्विष्णोरुक्तो वेदवेदान्तविद्भिः ।
[5]अस्मिन्नन्तर्युगपत् सन्निविष्टं
यावद् वाच्यं वाचकं यावदेव ।। २९ ।

आत्मैवायं देवदेवः पुराणो
नैनं प्रति प्रतिशब्देन योगः ।
परापेक्षः[6] प्रतिशब्दाद् यतः सः
नातः परः कस्यचिदप्रमेयः ।। ३० ।

जगत् सिसृक्षो रञ्जितस्य पूर्वं
वेदात्मैकः प्रणवः संबभूव ।
अन्तर्निगीर्णप्रलयोदयोऽयं
जगत् समीक्ष्य प्रतियोगमेति ।। ३१ ।

एतद्वाच्यात् सर्ववाच्यप्रसूति-
र्यद्वत् तद्वद् वादकानामतोऽसि ।
[7]यथैवासावनभिव्यक्तरूप-
स्तद्वल्लोके प्रणवोऽपि प्रसिद्धः ।। ३२ ।

---

१ A : प्राप्ता । २. A : चतुष्टम् ।
३. A : यत्प्राणा । ४. A : विस्नो- ।
५. A : -न्तरं । ६. -ापेक्षोप्रतो ।
७. A : यदैव- ।

ब्राह्मो वायं स्वप्रकाशोऽव्ययात्मा
स्वाकारस्थं ब्रह्म तत् प्राह येन ।
तस्माज्जाता येऽपि वर्णास्तथान्ये
तेऽपि स्वार्थं प्राहुरेवं यथायम् ॥ ३३ ।
नादः सोऽयं सर्ववर्णान्तरात्मा
प्रादुर्भूतो ब्रह्मणः सर्वहेतोः ।
यद् यत् कार्यं व्यापकात् संबभूव
तत् तत् सर्वं नामभिर्व्याप्य सोऽपि ॥ ३४ ।
व्याप्यैर्भावैः स्थगितं ब्रह्म यद्वा
भावाश्चैते तद् विना नैव भान्ति ।
तद्वद् वर्णैः स्थगितं नादरूपं
नादं विना न च तेऽपि स्फुरन्ति ॥ ३५ ।
शक्तिः सेयं[1] वैष्णवी घोररूपा
यस्याः पातान्मोक्षिणो यान्ति मोक्षम् ।
अस्यां युक्ताः कल्पनापाशमुक्ताः
स्वात्मारामा यान्ति चिन्तामचिन्त्याम्[2] ॥३६।
[3]मध्यमे गगनमध्यधिष्ठिता
ब्रह्मणस्त्वियमुदेति रूपिणी ।
शब्दशक्तिरिह जीवसंज्ञया
सर्वभावविलयादनन्तरम् ॥ ३७ ।
सर्वशब्दमयमात्मनो वपु-
र्यो विवेचयति कारणाद् धृतम्[4] ।
तद्वदुच्चरति तन्मुखाद् वच-
स्तत् तदेति तनुसर्गमन्त्रताम् ॥ ३८ ।

---

१. A । सो- । २. A : चिन्त्यम् ।
३. A : मध्यमं । ४. A : कारणाद्दतम् ।

ॐ स्वरूपमिह यत् प्रदर्शितं
सर्वमेव [1]तदकारसंश्रितम् ।
तद्धि सर्वजगतः प्रवर्तकं[2]
तत्स्वरूपरहितं प्रकाश्यते ॥ ३९ ।

भासते स्वयं वाग्वपुः[3] स्वकं
यन्न कर्तृ न च कर्म कस्यचित् ।
हलन्तं[4] भवति तत्प्रकाशकं
कर्तृकर्मकरणादिसंश्रयात् ॥ ४० ।

ॐकल्पमुभयरूपसंगमाद्
वर्तते सकलसंसृतिस्थितिः ।
तद्वियोगकरणेन धीमतां
जायते निखिलबन्धमुक्तता ॥ ४१ ।

अच्स्वरूपमिह पौरुषं वपु-
स्तत्प्रकाशकसवर्णनिष्ठितम् ।
प्राकृतं यदपि हल्स्वसंज्ञितं
तद् विकारवपुषि प्रतिष्ठितम् ॥ ४२ ।

अच्स्वरूपरहितं वपुर्यदा
हस्य भाति तत एव तत् तदा ।
स्पन्दते तदिह तत्प्रकाशितं
चित्रविश्ववपुषा तदग्रतः ॥ ४३ ।

हस्वरूपमुपलीयते यदा
पूर्ववर्णवपुषि प्रभास्वति ।
[5]आभिमुख्यमवलम्ब्य तद्गतं
क्षीणसंसृतिरिहोच्यते तदा ॥ ४४ ।

१. A : तदाकार- । २. A : -जगतो प्रवत्तकं । ३. A : चावपुः ।
४. A : हलान्तं । ५. A : अभिमुख्य ।

षोडशार्णकलनादनु तदा
यार्णजातिरपराप्युदेत्यतः ।
सा क्रमेण परिशिष्टदेवता
बीजरूपविधिनैव सार्थका ॥ ४५ ।

अहंकारः [1]सोऽयमिष्टश्चिकित्स्यः
[2]नैतन्मानी प्रतिमुच्यते कश्चित् ।
त्यक्त्वैवैनं सर्वकामैर्विमुक्ताः
शान्तात्मानो ब्रह्मभूयत्वमीयुः ॥ ४६ ।

एतावत्यः कल्पनाः सम्भवन्ति
याः संसृष्टा विश्ववैचित्र्यहेतोः ।
यासां बीजेष्टा हिताः[3] स्था यथार्हं
कामप्राप्त्या वैश्वरूप्यं भजन्ते ॥ ४७ ।

सर्वधर्मपरिवर्जितं यदा
द्रव्यमेति सुधियां दृशः पथि ।
चेतनं भवतु वाप्यचेतनं
मुक्तये भवति तावतैव तत् ॥ ४८ ।

यद् यदत्र परिकल्पशुद्धया
वस्तु किञ्चन दृशा विभाव्यते ।
तत् तदेव भवतो विमुक्तये
ज्ञायते किमुपदेशविस्तरैः ॥ ४९ ।

इति वामनदत्तेन कृतो वर्णविनिश्चयः ।
एतस्य सत्यविज्ञानादहंकारो न बाधते ॥ ५० ।

---

१. A : -श्चिकित्स्या । २. A : -मानी ।
३. A : हिता ।

विबुधवरवरिष्ठं[1] पूजितं पूजनीयै-
स्त्रिभुवनवरमीडे[2] संस्तुतं संस्तवार्हैः ।
अधिगतजनदोषं पाप्मनश्चित्रभानुं
भवभयभिदमेकं केशवं संश्रयेऽहम् ॥ ५१ ।

एकायने [3]प्रसूतस्य कश्मीरेषु द्विजन्मनः ।
कृतिर्वामनदत्तस्य सेयं वर्णसमाश्रया ॥ ५२ ।

॥ इति वर्णविकारो नाम पञ्चमं प्रकरणम्[4] ॥



१. A : -वरिष्टं ।
२. A : -मिहे ।
३. A : प्रस्तूतस्य ।
४. A : श्लोकाः ५२ ।

## अथ षष्ठं प्रकरणम्

प्रणम्य परमात्मानं[1] तन्मण्डलविधिक्रियाम् ।
तद्भक्तेषूपदेक्ष्यामि यथान्यायं यथागमम् ॥ १ ।

नित्यप्रबुद्धरूपाय बाह्यान्तरनुमोदिने[2] ।
अगृहीतविकल्पाय स्वभावगुरवे नमः ॥ २ ।

रत्नानि नोपयुज्यन्ते न धनानि न चापि[3] भूः ।
न चापि पशवो यत्र न मन्त्रो न बलेः क्रिया ॥ ३ ।

न मुद्रा न जपध्याने नाधिवासो न चार्चनम् ।
नापि[4] शुद्धिर्न दाहादिविधिरावाहसम्भवः ॥ ४ ।

भूमिरापोऽनलो वायुः खं मनो धीरहंकृतिः ।
अयत्नसिद्धे हृत्पद्मे दलैरेभिर्विभूषिते ॥ ५ ।

कालचक्रसमाविष्टे कर्णिकायां स्थितः प्रभुः ।
साधकैः प्रार्थ्यते देवो यः स्थितः परमेश्वरः ॥ ६ ।

सदा स्वात्मेन्द्रियैः शुद्धैः प्राणप्रलयकल्पितैः ।
[5]अच्छिन्नैर्नित्यमेवैभिर्दिवारात्रमतन्द्रितैः ॥ ७ ।

[6]चक्रारविन्द नाभ्यस्मिन् मण्डले धातृनिर्मिते ।
अविच्छिन्नप्रवाहेण दीक्षितैः सर्वतः समैः ॥ ८ ।

[7]केवलं विस्मृतेर्लेपादवलेपादयं क्रमः ।
[8]कुर्वतो तद्रसाक्षेपा[9] तत्र बोध्या बुधैरसौ ॥ ९ ।

---

१. A : -त्मने । २. A : -नुमोदने । ३. A : घ×जि ।
४ A : नाध्य । ५. A : नित्मेरच्च । ६. A : -रवि ।
७. A : -लेपाम । ८. A : कुर्वानो । ९. A : तद्रमाक्षेपा ।

यत्क्रियाकारिणस्ते स्युस्तां क्रियामात्मसंगताम् ।
[1]मन्वानाः प्रविमुच्यन्ते बध्यन्ते पुनरन्यथा ॥ १० ।

तथा च बोधितः साक्षात् परमेशेन पाण्डवः ।
वचसा यत् करोषीति तत् कुरुष्व मदर्पणम् ॥ ११ ।

एवं बुद्ध्वा वर्तमानो याः [2]सिद्धीरभिवाञ्छति ।
अयत्नेनैव ताः सर्वाः [3]सम्प्राप्यन्तेऽणिमादयः ॥ १२ ।

अप्रमेयप्रभावो हि यस्य राजा वशे स्थितः ।
भवन्ति वशगास्तस्य सर्वे तदनुचारिणः ॥ १३ ।

तथा हि राजा यो यस्मिन् विनियुक्तो भवेत् पदे ।
तत्र शमस्थराजोऽसौ भवेत् तत्प्रार्थितप्रदः ॥ १४ ।

शरीरारम्भिका एवं भूताधिष्ठातृदेवताः ।
तां तां भूमिमवाप्तस्य देवस्य स्वसमृद्धिदाः ॥ १५ ।

केवलं तत्र संरोधमर्थयन्तेऽस्य ताः पुनः ।
अनादृत्य प्रणीतस्य[4] न्यग्भवन्ति स्वभूमिषु ॥ १६ ।

गन्धक्षेत्रादिषु भृतो यावत् प्राप्तो न पिङ्गलाम् ।
तावत् सेच्छास्तदास्येच्छामनुधावन्ति देवताः ॥ १७ ।

मध्यमान्तःप्रविष्टस्य प्राप्तस्य स्वपदं प्रभोः ।
आशिषः प्रविलीयन्ते परिपूर्णस्य सर्वतः ॥ १८ ।

यथा च राजधानीस्थे न एते[5] न करप्रदाः ।
[6]करान् [7]समुपवाञ्छन्ति यथा विषयवासिनि ॥ १९ ।

---

१. A : मन्वानः । २. A : सिद्धा यो । ३ A : स्तम्पायोत्य ।
४. A : -प्रणतस्य । ५. A : एता । ६. A : करात् ।
७. AB : समुपवंच्छति ।

अथवास्यानवच्छिन्ना तदा भूतिः प्रवर्तते ।
निरुध्यते यदा नायं मितैर्विषयवासिभिः ॥ २० ।

तथा च पतञ्जलिना निर्दिष्टो धारणाक्रमः[1] ।
प्रदेशवती येनैषां जायते ऋद्धिसम्भवः ॥ २१ ।

ऋद्धयो भूतसंभूतास्तेषु यातेषु वश्यताम् ।
अर्थादेव प्रवर्तन्ते कस्तासामुपरि ग्रहः ॥ २२ ।

तस्मात् प्रयत्न आस्थेय आत्मतत्त्वावलोकने ।
नह्यनात्मविदः[2] क्वापि कदाचिदपि भाजनम् ॥ २३ ।

अनात्मनः परित्यागादात्मनः प्राप्तिरिष्यते ।
न तु भिन्नस्य तस्याप्तिर्ज्ञेया ग्रामघटादिवत् ॥ २४ ।

मन्त्रः सदोदितो नादो मुद्रा या काचिदास्थितिः ।
ध्यानं सार्वत्रिकी[3] दृष्टिर्जपो यद् यत् प्रभाषणम् ॥ २५ ।

केवलं सर्वकार्येषु न चेदात्मनि विस्मृतिः ।
सर्वकर्मफलावाप्तिर्भवेदेवं विजानतः ॥ २६ ।

यस्माद् वामनदत्तस्य परमार्थप्रकाशनात् ।
प्रीयतां पुण्डरीकाक्षः परमात्मा सनातनः ॥ २७ ।

॥ इति परमार्थप्रकाशो नाम षष्ठं प्रकरणम्[4] ॥



---

१. A : धारणक्रमः ।   २. A : नह्यतात्सविदः ।
३. A : सर्वन्त्रिकी ।   ४. A : श्लोकाः २७ ।

# अथ सप्तमं प्रकरणम्

यतः सर्वाणि भूतानि प्रजायन्ते युगागमे ।
यस्मिंश्च प्रलयं यान्ति नमस्तस्मै महात्मने ॥ १ ।

[1]यज्ञानां जपयज्ञोऽस्मीत्येतद् गीतासु यच्छ्रुतम् ।
सर्वक्रियाविशेषेण तदेतदिह चर्च्यते ॥ २ ।

परात् सूक्ष्माद् व्यापकाद् वाऽप्यनिर्देश्यात् [2]स्वयंभुवः ।
जायते[3] प्रथमं शक्तिः परा वाग् विश्वकारणम् ॥ ३ ।

प्रणवात्मा प्राणहेतुस्त्रिरूपा त्रिषु कारणम् ।
यावत् संभवसंकल्पकवलीकृतविग्रहा ॥ ४ ।

यस्तस्याः प्रथमावेशः सा सूक्ष्मा कालसंस्थितिः ।
यस्याः संवत्सरे[4] निष्ठा या[5] वायं देशसन्निधिः ॥ ५ ।

कालपर्यवसानैव देशसंस्थितिरिष्यते ।
स्वरूपान्नातिरिच्येते देशकालौ परस्परम् ॥ ६ ।

कालो द्वादशमासानां[6] ज्ञातः संक्रमणाद् रवेः ।
[7]सर्वस्वदेशः स्वान्तस्थः[8] सर्व एव तदाश्रयः ॥ ७ ।

सोऽपि द्वादशभागात् स बुद्ध्यादीन्द्रिययोगतः ।
[9]चिदा .................................................... ॥ ८ ।



---

१. A : यज्ञानो ।　　२. A : व्यनिवेश्यात् ।　　३. A : ज्ञायते ।

४. A : संवत्सगे　　५. A : य　　६. A : -मासाता ।

७. A : सर्वस्थ ।　　८. A : स्वादेम्नः ।

९. एतावतोंऽशस्यैव मातृकासु समुपलम्भात् प्रकरणस्यास्य नामादिकं न विज्ञायत इति विज्ञापयति सम्पादको वागीशः शास्त्री ।

# सारस्वती सुषमा

## सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. **"वित्त अधिकारी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी—२२१ ००२ (उ० प्र०)"** इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः **"सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी—२२१ ००२ (उ० प्र०)"** इति सङ्केतेन विधेयः।



पञ्जीकरणसंख्या—६९८१/५७

## सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **अद्वैतमकरन्दः**—श्रीलक्ष्मीधरकविप्रणीतमिदं ग्रन्थरत्नं 'पण्डितपरिक्रमायाः' चतुर्थस्तवकरूपेण श्रीस्वयंप्रकाशयतिप्रणीतया 'रसाभिव्यञ्जिका'व्याख्यया, अथ च श्री ए० ई० गफप्रणीतेन आङ्ग्लभाषानुवादेन समलङ्कृत्य प्रकाशितम्—१००—००

२. **वेदान्तकौस्तुभप्रभा**—श्रीमत्केशवकाश्मीरिभट्टविरचितोऽयं ग्रन्थः 'पण्डित-परिक्रमायाः' षष्ठस्तबकरूपेण सुसम्पाद्य प्रकाशितः— ३००—००

३. **ईश-केनोपनिषदौ**—ग्रन्थोऽयं पण्डितक्षेत्रेशचन्द्रचट्टोपाध्यायकृताङ्ग्लभाषानुवादेन समलङ्कृत्य 'पण्डितपरिक्रमायाः' सप्तमस्तबकरूपेण प्रकाशितः— ५०—००

४. **तत्त्वमुक्तावली**—गौडपूर्णानन्दचक्रवर्तिविरचितमिदं ग्रन्थरत्नं 'पण्डितपरि-क्रमायाः' पञ्चमस्तबकरूपेण श्री ई० बी० कावेलमहोदयकृताङ्ग्लभाषानुवादेन समलङ्कृत्य प्रकाशितम्— ५०—००

५. **शब्दार्थमीमांसा**—व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थो बहुशास्त्रमर्मज्ञैः डॉ० गोरीनाथशास्त्रिमहोदयैः स्वोपज्ञतया प्रणीतः— १००—००

६. **काशीखण्डः (द्वितीयो भागः)**—महर्षिव्यासप्रणीतः स्कन्दपुराणान्तर्गतोऽयं ग्रन्थ आचार्यश्रीरामानन्दकृतया 'रामानन्दी'-संस्कृतव्याख्यया, अथ च पण्डित-श्रीनारायणपतित्रिपाठिकृतया 'नारायणी'-हिन्दीव्याख्यया च समलङ्कृत्य प्रकाशितः— २००—००

७. **व्याकरणशास्त्रे लौकिकन्यायानामुपयोगः**—ग्रन्थोऽयं व्याकरणशास्त्रमर्मज्ञैः डॉ० रामकिशोरशुक्लमहोदयैः प्रणीतः— ८०—००

८. **वास्तुसौख्यम्**—श्रीटोडरमल्लविरचितं ज्यौतिषशास्त्रस्य वास्तुसम्बन्धिग्रन्थमिदं आचार्यश्रीकमलाकान्तशुक्लकृतया हिन्दी-व्याख्यया समलङ्कृत्य प्रकाशितम्—१२०-००

९. **सुन्दरीमहोदयः**—श्रीशङ्करानन्दनाथप्रणीतस्तन्त्रशास्त्रस्यापूर्वोऽयं ग्रन्थः पाठ-भेदानालोच्य सर्वप्रथमं सुसम्पाद्य प्रकाशितः— १५०—००

१०. **त्रिकदर्शनम्**—ग्रन्थोऽयं बहुशास्त्रमर्मज्ञैः प्रो० रामचन्द्रद्विवेदिमहोदयैः स्वोपज्ञ-तया प्रणीतः— १००—००

११. **श्रीस्वच्छन्दतन्त्रम्**—तन्त्रशास्त्रस्याधारभूतमिदं ग्रन्थरत्नं महामाहेश्वराचार्य-श्रीक्षेमराजकृतोद्द्योताख्यविवरणोपेतं सत् प्रकाशितम्—

| | | | |
|---|---|---|---|
| प्रथमो भागः | ५०—०० | द्वितीयो भागः | ५०—०० |
| तृतीयो भागः | ५०—०० | चतुर्थो भागः | ६०—०० |
| | | पञ्चमो भागः | ५०—०० |

१२. **श्रीतन्त्रालोकः**—ग्रन्थोऽयं महामाहेश्वराचार्यश्रीमदभिनवगुप्तविरचितः। अशेषागमोपनिषदालोकोऽयं ग्रन्थ आचार्यश्रीजयरथकृतया 'विवेक'-व्याख्यया, अथ च डॉ० परमहंसमिश्रकृतया 'नीर-क्षीर-विवेक'हिन्दी-व्याख्यया समलङ्कृत्य प्रकाशितः—
प्रथमो भागः—१२४—००
द्वितीयो भागः—१३२—००

१३. **विरूपाक्षपञ्चाशिका**—ग्रन्थरत्नमिदं श्रीविद्यानन्दचक्रवर्तिकृतविवृत्या, अथ च गभीरया भूमिकया समेधितं सत् प्रकाशितम्— १६—००

१४. **साम्बपञ्चाशिका**—श्रीसाम्बप्रणीतोऽयं ग्रन्थो राजानकश्रीक्षेमराजकृत-विवृत्या, अथ च गभीरया भूमिकया समलङ्कृत्य प्रकाशितः— १२—००

पत्रव्यवहारसङ्केतः—प्रकाशनाधिकारी सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी—२२१००२